

# राष्ट्रिय संस्कृत संस्थानम्
नवदेहली

गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठ ग्रन्थमाला

॥ ३४ ॥

श्रीवेङ्कटेश्वरविरचितम्

# श्री चित्रबन्धरामायणम्

श्रीयज्ञनारायणभट्टकृतबालप्रबोधाख्यव्याख्योपेतम्

सम्पादकः

डॉ० सत्यव्रत त्रिपाठी



**Rashtriya Sanskrit Sansthan**

*( Under the auspices of the Ministry of Human Resources Development, Govt. of India )*

**New Delhi**

•

**Ganganatha Jha Kendriya Sanskrit Vidyapitha TEXT SERIES**

•

*General Editor*

**Dr. G. C. Tripathi**

•

# No. 34

# Śrī Citrabandha Rāmāyaṇam

*by*

Veṅkaṭeśvara Bhaṭṭa

*Edited by*

**Dr. Satyavrat Tripathi**



ALLAHABAD

1992

राष्ट्रियसंस्कृतसंस्थानम्
( केन्द्रीयशिक्षामन्त्रालयस्याङ्गभूतम् )
देहली

—•—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला
प्रधानसम्पादकः
डॉ० गयाचरण त्रिपाठी

—•—

चतुस्त्रिंशं प्रसूनम्

—•—

वेङ्कटेश्वरविरचितं यज्ञनारायणभट्टकृतव्याख्योपेतम्

# श्री चित्रबन्धरामायणम्

—•—

सम्पादकः
डॉ० सत्यव्रत त्रिपाठी

—•—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आजाद पार्क
प्रयागः–२
१९९२ ई०

# श्री चित्रबन्धरामायणम्

## वेङ्कटेश्वरविरचितं यज्ञनारायणभट्टकृतव्याख्योपेतम्

सम्पादकः

डॉ० सत्यव्रत त्रिपाठी




प्रयागस्थ-

श्रीगङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठेन

प्रकाशितम्

१९९२ ई०

प्रकाशकः
डॉ० गयाचरण त्रिपाठी
प्राचार्यः
गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आज़ाद पार्क
इलाहाबाद-२

●



●

मूल्यम्

978-93-83135-47-8

●

मुद्रकः
शाकुन्तल मुद्रणालयः
३४, बलरामपुर हाउस
इलाहाबाद-२

## FOREWORD

The Vidyapeetha is happy to place before the lovers of Sanskrit poetry, a unique work of Sanskrit poetical art in the form of this *Citrabandha-rāmāyaṇam* composed by one Venkaṭeśa who flourished in the first half of the 17th century.

This masterly composition which stands out as a tribute to the great scholarship, erudition and poetical skill of its author is a rare specimen of its nature and occupies a place of pride in the relatively short list of the *Citrakāvyas*. Within a comparatively small framework of 6 cantos, the poet has narrated the story of the whole of the Vālmīkīya Rāmāyaṇa in such a masterly manner that almost each verse exhibits a rare combination of letters and words giving rise sometimes to alliterations (*anuprāsa*), sometimes to repetition of sound-clusters (*yamaka*), sometimes to puns or *double entente* (*śleṣa*) and sometimes to figurative arrangement of syllables (*citrabandha*). It is obvious that only a profound scholar having exceptional command over Sanskrit grammar and vocabulary could achieve and accomplish such a *tour de force*.

Ancient critics of Sanskrit poetry, especially those aligned with the *Dhvani* school, have dubbed the *Citra-kāvya* as *avara* or *adhama*, i. e. the inferiormost type of poetry. It is certainly a biased statement doing injustice to a whole genre of Sanskrit poetry which does not seek access to the heart of a *sahṛdaya* but aims at impressing and pleasing a *scholar* and at gratifying his intellect by means of poet's unusual command over words and grammar.

The commentary on the *Citrabandha-rāmāyaṇa* printed here has been composed by Yajñanārāyaṇa, the father of the author which is another unique feature of this work. It is available only upto the 5th verse of the Vth canto which lets the editor surmise that these annotations remained incomplete probably due to the sad demise of the aged father, which, I think, is not unlikely

Both Father and Son were prolific writers. A number of works have been ascribed to them (cf. pp 11, 14 of the Sanskrit preface) but I do not remember to have seen any of these in print. This is the first work of theirs, produced in the joint authorship, to see the light of the day and which consequently brings both the father and the son, from oblivion to light.

The critical edition of this work has been ably and competently executed by Dr. Satyavrat Tripathi, my former pupil and present colleague, who has worked on it constantly for a number of years. He has spared no pains

and shunned no labour to make the work as flawless as conceivable and as useful as possible. The illustrations to a number of *bandhas* used in this book given at the end of the work have also been supplied by him.

The Editor, Dr. Tripathi, has narrated in the preface his woeful tale of the troubles and travails which he underwent while trying to complete this work. It is true that the task of the restoration of the text was not an easy one in face of a host of difficulties and the multitude of problems which gradually cropped up. At a certain stage some persons even suggested that the work perhaps carries a curse on it and should, therefore, be abondoned ! However Dr. Tripathi remained undaunted and without letting himself be disheartened, he brought this work to a successful end true to the maxim :

विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारभ्य चोत्तमजना न परित्यजन्ति ।

He deserves all praise for his perseverence and single-minded devotion. I wish to thank him sincerely for his patience and dedication and for his deep personal involvement in seeing that the work is brought to light in-spite of manifold odds and also for the tremendous labour and time that he has invested into the text to restore it to a readable form.

A special note of thanks is also due to Shri Upendra Tripathi, the enthusiastic, young proprietor of Shakuntala

Mudraṇālaya who also had to bear the brunt of the 'evil spell' cast on this Kāvya ! He not only suffered losses in his press in the form of frequent breakdowns of his machines but also faced a number of problems in his personal life right since he started printing this work. But remaining unperturbed and displaying rare determination, he carried out the work accepted and undertaken by him :

अंगीकृतं सुकृतिनः परिपालयन्ति ।

Let the Sanskritists be pleased with the appearance of this Kāvya which is a remarkable specimen of its kind and bless the Editor and the Publisher.

*In fine* let me say that I earnestly hope that someone later would take up a better edition of this work making use of the material available at Saraswati Mahal Library at Tanjore (and may be elsewhere too), though, I hasten to add, that under the prevailing circumstances, it was perhaps the optimum which could be achieved :

सिद्धिः साध्ये सतामस्तु ।

G. N. Jha K. S. Vidyapeetha
Allahabad
24th Feb. 1992

**Gaya C. Tripathi**
*Principal*

पूज्य पितामह

स्व० पं० हरगोविन्द त्रिपाठी, व्याकरणाचार्य

प्राचार्य

सेठ अमरचन्द संस्कृत विद्यालय

साहबगंज, फैजाबाद (उ० प्र०)

को

सविनय समर्पित

# उपन्यासः

## चित्रकाव्यस्येतिवृत्तम्

आचार्यप्रवरेण मुनिना भरतेन सर्वप्रथमं स्वकीये नाट्यशास्त्रे चित्रकाव्यस्य परिचायकं यमकमेव शब्दालङ्कारत्वेन उल्लिखितम् । यथा—

'शब्दाभ्यासस्तु यमकं पादादिषु विकल्पितम्' ।[1]

अभिनवभारत्याम् अभिनवगुप्तपादाचार्याः एवं व्याकुर्वन्ति—

"एवमर्थविषयलक्षणप्रसङ्गेनार्थलङ्कारान् प्रदर्श्य शब्दालङ्कारस्वरूपमाह ...... । तुरर्थालङ्कारेभ्यो व्यतिरेकमाह । शब्दशब्देन वर्णः, पदं, तदेकदेश इति सर्वं गृह्यते तेनानुप्रासः, लाटीयादेरनेनैवोपसंग्रहः । यमौ द्वौ समजातावुच्येते तत्प्रकृतित्वाद्यमकम् । तेनैकस्याक्षरस्य पदस्य वा द्वितीयं सदृशं निरन्तरं सान्तरं वा शोभाजनकमलङ्कारः । यथा मुक्ताफलस्योचितमुक्ताफलान्तरपद्मरागादेर्वोपाश्रयविशेषः समुचितसहासीनसत्पुरुषमध्यपतनं वा सत्पुरुषान्तरस्य ।"

आचार्यभरतः यमकस्य पादान्तकाञ्ची-समुद्ग—विक्रान्त—चक्रवाल सन्दष्ट-पादादि-आम्रेडित-चतुर्व्यवसित-मालाप्रभृतिदशभेदान् सूचयति ।

---

१—नाट्यशास्त्रम् १६।५९

शब्दालङ्काराणां त्रिविधा वृत्तिः—वर्णावृत्तिः, पदैकदेशावृत्तिः, पदावृत्तिश्च। यमकमेव विन्यासवैविध्येन चित्रबन्धं निर्माति। नाट्यशास्त्रे यमकभेदेष्वपि चक्रवाल-काञ्ची-मालासंज्ञकाः आकृतिसूचकाः भेदाः परिगणिताः। कालान्तरे चक्रवालयमकम् चक्रबन्धरूपे परिवर्तितमिव प्रतीयते।

अग्निपुराणे यमकस्य षोडशभेदाः चित्रबन्धानामष्टौ भेदाश्च कथिताः। यथा–गोमूत्रिका–-अर्धभ्रमक-सर्वतोभद्रम्--अम्बुजम्--चक्रम्---चक्राब्जम्--दण्डः -मुरजश्च।

काव्यालङ्कारे आचार्यभामहः यमकस्य पञ्चभेदान् स्वीकरोति। अन्ये भेदा एष्वेव समाविष्टाः। प्रहेलिकालक्षणं दत्वा अस्य व्याख्यागम्यत्वञ्च निर्दिश्य उदाहरणं न प्रस्तुतीकृतम्।

आचार्यदण्डिना काव्यादर्शे सविस्तरेणोक्ता यमकभेदाः। गोमूत्रिका अर्धभ्रमकम्-सर्वतोभद्रम्-प्रभृतयः चित्रबन्धा अपि लक्षणोदाहरणपुरस्सराः प्रतिपादिताः। प्रहेलिकायाः सर्वाङ्गीणं निरूपणमत्रोपलभ्यते।

काव्यालङ्कारसूत्रवृत्तौ आचार्यवामनेन शृङ्खला-परिवर्तक-चूर्ण इति भङ्गविशेषाः यमकस्योपकारकाः कथिताः। काव्यालङ्कारस्य पञ्चमे अध्याये यमकश्लेषयोर्निरूपणानन्तरं चित्रबन्धप्रतिपादनं दृश्यते। खड्ग-मुशल-धनुः-शर-शूल-शक्ति-हल-रथपद-तुरगपद-गजपद-प्रतिलोमानुलोम-अर्धभ्रम-मुरज-सर्वतोभद्र-पद्म-अनुलोम, विलाम विपर्यस्ताक्षरपाठादयस्तत्र कथिताः। अष्टबन्धस्थपद्यानां महाचक्र एकत्र विन्यासो रुद्रटस्यापूर्वकौशलव्यञ्जकः।

श्रीभोजराजस्य 'सरस्वतीकण्ठाभरणम्' समस्तलक्षणग्रन्थेषु प्रधानतमः। अत्र चित्रकाव्यप्रकरणे वर्णस्थानस्वराकारगतिर्बन्ध इति षड्भेदविशिष्टस्य चित्रकाव्यस्योल्लेखः वैशद्येन प्राप्यते। आक्रातमूलकाः बन्धा अप्यत्र वर्णिताः। यथा पद्मबन्धः चक्र-द्विशृङ्गाटक-शरयन्त्र-व्योम-मुरज-एकाक्षरमुरज-मुरजप्रस्तार-गोमूत्रिकादयो निगदिताः।

आचार्यमम्मटः काव्यप्रकाशे:—

'अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः ।[१]

इति लक्षणमुक्त्वा "तदेतत् काव्यान्तर्गडुभूतमिति नास्य भेदलक्षणं कृतम्" इत्युक्त्वैवास्य विशदविवेचनाद्विरमति ।

आचार्यो हेमचन्द्रः—

'स्वरव्यञ्जन-स्थान-गति-आकार-नियम-च्युत-गूढादिचित्रम् ।[२]

इत्युक्त्वा प्रतिबन्धमेतेषामुदाहरणान्यदात् । आकारबन्धेऽस्मिन् ग्रन्थे न कोऽपि विशेषः । राजानकरुय्यकोऽपि वर्णानां खड्गाद्याकृतिहेतुत्वे चित्रम् ।[३] इति चित्रालङ्कारं निर्दिशति । अलङ्कारकौस्तुभकारः कविकर्णपूरः प्रतिलोमानुलोमपाद- प्रतिलोमानुलोमश्लोक - सर्वतोभद्र-छत्र - खड्ग- मुरज-पताका-गदा-पद्म-चक्र-शार्ङ्गबन्धान् चित्रप्रसङ्गे प्रस्तौति ।

आचार्यविश्वनाथः—

"पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते ।"[४]

आदिशब्दात् खड्गमुरजचक्रगोमूत्रिकादयः । स्वग्रन्थे अयमाचार्यः चित्रं काव्यान्तर्गडुभूतं मनुते । तस्माद्वैशद्येन नोल्लिखति । उद्भटेन तु 'काव्यालङ्कारसारसंग्रहे'ऽनुप्रासलाटानुप्रासादिव्यतिरिक्तः नैकोऽपि शब्दालङ्कारो निरूपितः । चित्रकाव्यप्रतिपादकेषु प्रकीर्णलक्षणग्रन्थेषु धर्मदाससूरेः 'विदग्धमुखमण्डनम्' इतिग्रन्थः स्मरणीयः । श्रीदामोदरमिश्र-शास्त्रिप्रणीतम् 'चित्रबन्धकाव्यमपि' लक्षणोदाहरणग्रन्थरूपेणोल्लेखनीयम् । आचार्यरामरूपपाठकस्य 'चित्रकाव्यकौतुकम्' ग्रन्थोऽपि अविस्मरणीयः । आचार्येणात्र बहवः आकृतिबन्धाः प्रस्तुताः । आकृतिभिन्नबन्धान् प्रति नास्याभिरुचिः दृश्यते ।

---

१—काव्यप्रकाशः ९।११७

२—काव्यानुशासनम् ५।४

३—अलङ्कारसर्वस्वम् सू० ५

४—साहित्यदर्पणम् १०।१३

न केवलमेते ग्रन्था एव चित्रकाव्यस्य वर्णनं कुर्वन्ति अपितु महर्षिपाणिनेरष्टाध्यायी अपि चित्रात्मककाव्येन परिचिता। 'संज्ञायाम्[१]' 'बन्धे च विभाषा[२]' इतिसूत्रद्वयस्य व्याख्याने काशिकायां क्रौञ्चमयूरिका -अट्टालिका-हस्त-चक्र इति बन्धभेदा उल्लिखिताः। एतेन निर्णेतुं शक्यते यन्महर्षिपाणिनेः कालेऽपि चित्रबन्धानां रचना काव्येषु क्रियते स्म।

## चित्रकाव्यलक्षणम्

समग्रे काव्यशास्त्रे चित्रालङ्काराः आचार्यैः प्रायः उपेक्षिता एव अतः दिङ्मात्रेण दर्शिताः। भोजराजेनैव केवलम् एते वैशद्येन निरूपिताः। सोऽपि नाधिकमाद्रियते चित्रालङ्कारम्—

"दुष्करत्वात्कठोरत्वाद् दुर्बोधत्वाद्विनावधेः।
दिङ्मात्रं दर्शितं चित्रे शेषमूह्यं महात्मभिः॥[३]"

आचार्येण दण्डिनापि स्वकीये काव्यादर्शे यस्मिन् परिच्छेदे चित्रालङ्कारा निरूपितास्तस्य नामापि तेन दुष्करपरिच्छेदो विहितः एवं चित्रकाव्यमाचार्यदण्डी दुष्करम्, आचार्यो मम्मटः कष्टकाव्यम्[४], विद्याधर-विश्वनाथौ काव्यान्तर्गडुभूतम्, आचार्य केशवमिश्रः कौतुकविशेषकारकमिति च कथयति। चित्रलक्षणं वदता आचार्यरुद्रटेन कथितम्—

"यन्नाम नाम यत्स्यात्तदाकृतिर्लक्षणं मतं तस्य।
तल्लक्ष्यमेव दृष्ट्वाव.................................॥"[५]

तेन उक्तं यत्—

"भङ्ग्यन्तरकृततत्क्रमवर्णनिमित्तानि वस्तुरूपाणि।
साङ्कानि विचित्राणि च रच्यन्ते यत्र तच्चित्रम्॥"[६]

---

१—अष्टाध्यायी ३।४।४२
२—अष्टाध्यायी ६।३।१३
३—सरस्वतीकण्ठाभरणम् २।१३०
४—काव्यप्रकाशः ६।८५
५—काव्यालङ्कारः ५।५
६—काव्यालङ्कारः ५।१

श्लोकोऽयं नेमिसाधुना एवं व्याख्यायितम् "यत्र काव्ये वस्तूनां चक्रादीनां रूपाणि संस्थानानि रच्यन्ते निबध्यन्ते तच्चित्रसादृश्यादाश्चर्याद्वा चित्रं नामालङ्कारः ॥"

चित्रबन्धं विद्याधरः एकावल्यामाश्चर्यकारकत्वेन अभिव्यनक्ति "अहो येन क्रमेण गता वर्णपङ्क्तिस्तेनैव क्रमेण प्रत्यागतेत्याश्चर्यकारित्वाद् वा चित्रमिति ।"[1] आचार्यआनन्दवर्धनः चित्रस्यालेख्यमर्थं समुद्भासयति— "केवलवाच्यवाचकवैचित्र्यमात्राश्रयेण उपनिबद्धालेख्यप्रख्यं यदाभासते तच्चित्रम् ।"[2]

वाक्यस्यास्य भावः अभिनवगुप्तमहोदयानां लोचने सुस्पष्टम्—

"यमकचक्रबन्धादिचित्रतया प्रसिद्धमेव तत्तुल्यार्थमेवार्थचित्रं मन्तव्यम् इति भावः । आलेख्यप्रख्यमिति रसादिजीवरहितं मुख्यप्रकृतिरूपं चेत्यर्थः ।"

(ध्वन्यालोकलोचनम्)

आचार्यप्रवरयोः मताभ्यामिदं समायाति यद् आचार्य आनन्दवर्धनः आलेख्यं चित्रं मनुते किन्तु अभिनवगुप्तमहोदयः यमकमपि अस्मिन् सन्दर्भे स्वीकरोति । यतो यत्र चित्रालङ्कारस्योपजीव्यतया यमकं प्राधान्येनोररीकृतं तत्रैव तदेव गतिचित्रत्वेन पल्लवितम् । एवं ध्वनिवादिभिः चक्रपद्ममुरजादिविविधाकारहेतुभूता वर्णविन्यासाः प्रामुख्येन चित्रालङ्कारत्वेन स्वीकृताः । आचार्यो मम्मटः—

"तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता ।"

सन्निवेशविशेषेण यत्र न्यस्ताः वर्णाः खड्गमुरजपद्माद्याकारमुल्लासयन्ति तच्चित्रकाव्यम् ।"[3]

---

१—एकावली ७।५-७ वृत्ति ।

२—ध्वन्यालोकः ३।४२ वृत्ति ।

३—काव्यप्रकाशः ९।८५

आचार्यो रुय्यकः—

"वर्णानां खड्गाद्याकृतिहेतुत्वे चित्रम् ।"[1]

आचार्यजयदेवः—

"काव्यवित्प्रवरैश्चित्रं खड्गबन्धादि लक्ष्यते ।"[2]

आचार्य विद्यानाथेन एकावल्याम्—

वर्णानामथ पद्माद्याकृतिहेतुत्वमुच्यते चित्रम् "

आचार्यविश्वनाथः—

"पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते"[3]

आदिशब्दात् खड्गमुरजचक्रगोमूत्रिकादयः ।" एतानि सर्वाण्येव उद्धरणानि चित्रस्यालेख्यतामेवोद्घोषयन्ति । हेमचन्द्राचार्यः किञ्चिदधिकं विवेचयति—

"स्वरव्यञ्जनस्थानगत्याकारनियमच्युतगूढादि चित्रम् ।"[4]

भोजदेव एव एकः समर्थः आचार्यः यश्चित्रस्य क्षेत्रं पूर्वाधिकं निर्धार्य आलेख्याश्चर्ययोः व्यतिरिक्तं वर्णस्थानस्वराकारगत्यादीनां विन्यासवैचित्र्यं प्रादर्शयत्—

वर्णस्थानस्वराकारगतिबन्धान् प्रतीह यः ।
नियमस्तद्बुधैः षोढा चित्रमित्यभिधीयते ।।"[5]

---

१—अलङ्कारसर्वस्वम् सू० १०

२—चन्द्रालोकः ५।६

३—साहित्यदर्पणम् १०।१३

४—काव्यानुशासनम् ५।४

५—सरस्वतीकण्ठाभरणम् २।१०६

वस्तुतः अस्मिन् विषये आचार्यरुद्रटस्य—

"यन्नाम नाम यत्स्यात्तदाकृतिर्लक्षणं मतं तस्य ।
तल्लक्ष्यमेव दृष्ट्वावधार्यमखिलं तदन्यदपि ।।"[१]

कारिकोपरि आचार्य नेमिसाधोः टीका अधिकतरमौदार्यं समाचरति—

"यदिति । चक्रादिकं प्रसिद्धं नाम संज्ञा यस्येति विग्रहः । तद्यन्नाम, द्वितीयस्तु नामशब्दः प्राकाश्ये, तदेवं विधं वस्तुवत् स्यात्तदाकृतिस्तदाकारस्तस्य चित्रस्य लक्षणमभिहितम् । यदनुकार्यस्य चक्रादेर्नाम संस्थानं च तदेवानुकरणस्य करणीयमित्यर्थः । तच्च चित्रलक्षणमखिलं समग्रं माघादिमहाकविरचितं लक्ष्यमुदाहरणमेव दृष्ट्वावधार्य ज्ञेयम् । ततो वस्तुरूपादन्यदपि सर्वतोभद्रादिकं लक्ष्यमेव दृष्ट्वावधार्यम् । अथवा ततो लक्ष्योक्ताद्वस्तुरूपादन्यदपि मत्स्यबन्धादिकं स्वधियैवाभ्यूह्यम् । मार्गं दृष्ट्वान्यथाऽपि करणं न दोषायेत्यर्थः । तेन चक्रारनेमिपद्मदलादावनियम उक्तो भवतीति स्थितमेतत् ।"

## चित्रस्य दुष्करत्वम्

यद्यप्याचार्येण दण्डिना चित्रकाव्यं सुविवेचितं तथापि सः नैकान्तमधुरम्[२] इति स्वीकरोति । आनन्दवर्धनाचार्यः ध्वनौ रसे च एतावान् मग्नः यत् तदतिरिक्तं सायासमसहजं च सर्वमपि काव्यं तस्मै नैव रोचते स्म । आनन्दवर्धनमनु अनेकैराचार्यैः काव्यस्यास्य दुष्करत्वनीरसत्वकठोरत्वदुर्बोधत्वादिदोषा इङ्गिताः । कतिपयैस्तु चित्रकाव्यस्य केवलं दोषरूपत्वमाकलय्य तन्नाभिनन्दितम् । अस्मिन् विषये चित्रकाव्यवर्णनसमुत्साहितो भोजदेवोऽपि "दुष्करत्वात् कठोरत्वादि"[३]ति कथयन् नैव सङ्कुचति मम्मटाचार्यस्य 'कष्टं काव्यमेतदिति'[४] इयमुक्तिः केवलं दोषज्ञापनमेव मम्मटानुवर्तिनां कृते अस्य विषये अनुत्साहकरञ्च ।

---

१—काव्यालङ्कारः ५।५
२—काव्यादर्शः १।६१
३—सरस्वतीकण्ठाभरणम् २।१३०
४—काव्यप्रकाशः ६।८२ वृत्तिः

आचार्यविश्वनाथः चित्रं काव्ये गडुभूतं स्वीकरोति—

"काव्यान्तर्गडुभूततया तु नेह प्रपञ्च्यते ।
रसस्य परिपन्थित्वान्नालङ्कारः प्रहेलिका ।
उक्तिवैचित्र्यमात्रं सा च्युतदत्ताक्षरादिका ॥"[१]

इत्यत्र आचार्यश्चित्रं रसानुभूतौ बाधकत्वेन वर्णयति । पण्डितप्रवरेण अप्पयदीक्षितानुसारेण चित्रमीमांसायाम्—

"शब्दचित्रस्य प्रायो नीरसत्वान्नात्यन्तं तदाद्रियन्ते कवयः, नवा तत्र विचारणीयमतीवोपलभ्यते" इति कथितम् । तत्रैव परिस्थितिवशाद् आचार्योऽयम् चित्रं चारु मनुते—

'यदव्यङ्ग्यमपि चारु तच्चित्रम्"

आचार्यनरेन्द्रप्रभसूरिः चित्रं शक्तिप्रकाशनफलरूपं विवेचयति—

"शक्तिमात्रप्रकाशनफलैवेयं कविता न भूम्ना महाकविभिरादृता रसवीथीबहिष्कृतत्वादिति ज्ञापनाय न प्रपञ्च्यते" इति ।[२]

काचिद् रचना सालङ्कृतिरपि अरसा प्रियेव न रोचते—

"रतिरीतिवीतवसना प्रियेव शुद्धापि वाङ्मुदे सरसा ।
अरसा सालङ्कृतिरपि न रोचते शालभञ्जीव ॥[३]

चित्रकाव्ये 'निरोष्ठ्यम्' प्रभृति स्थानचित्रं न केवलं परिकल्पनमेव अपितु दशकुमारचरिते प्रियया मन्त्रगुप्तः यदा ताडितस्तदा क्षताधरः स ओष्ठ्यवर्णोच्चारणेऽप्यसमर्थः । तत्र तदुच्चरिताः शब्दा निरोष्ठ्यवर्णमया एव सहजरमणीयाः, सायासप्रयुक्ता अपि हृदयहारित्वेन विद्वद्भिराशंसिताः ।

प्रायः कविभिः स्वकाव्येषु विविधबन्धानां प्रयोगः युद्धप्रकरणे एव कृतः । गजपद-तुरगपद-गोमूत्रिका-सर्वतोभद्र-चक्र-विषमगतिप्रभृतिबन्धानां प्रयोगस्य अवसरसङ्गतिः युद्धकाले एव परिकल्पिताऽस्ति —

१—साहित्यदर्पणम् १०।१३-१४
२—अलङ्कारमहोदधि ७।२१ वृत्तिः
३—आर्यासप्तशती १।५४

विषमं सर्वतोभद्रचक्रगोमूत्रिकादिभिः ।
श्लोकैरिव महाकाव्यं व्यूहैस्तदभवद्बलम् ।।[1]

अग्निपुराणानुसारम्—

गोष्ठ्यां कुतूहलाध्यायी वाग्बन्धश्चित्रमुच्यते ।
प्रश्नप्रहेलिकागुप्तं च्युतदत्ते तथोभयम् ।।

गोष्ठ्यादिषु चित्रप्रहेलिकाचित्रबन्धादयः कुतूहलायैव । मम्मटाचार्यानुसारेण विश्वनाथेन च प्रकरणादीनां महिम्ना दोषोऽपि गुणो भवति । यथा रौद्ररसे कष्टत्वं गुण एव ।

भोजदेवानुसारेण अल्पज्ञानाम् शिशूणां च कृते यत् काव्यं शीघ्रबोधाय भवति तत्तु प्रसादपरता तत्काव्यस्य । किन्तु चित्रकाव्ये एतद्विपरीते सत्यपि न दोषाय कल्पते । अप्रसाददोषः चित्रत्वाद् गुणत्वमेति कदाचिच्च कविकौशलात् प्रतीयमानविरोधोऽपि दोषगणनामुत्क्रम्य गुणवीथीं विगाहते ।

चित्रकाव्यं तद्विषये नातिपरिचितानाम् अल्पज्ञानां कृते च दुर्बोधत्वं दुष्करत्वं च कामं भवतु परं तन्मर्मज्ञानां तत्सरणिसुपरिचितानाम् अधीताशेषसाहित्यव्याकरणानां कृते चित्रकाव्यं बुद्धेः व्यायामभूतं रसायनभूतं च ।

दुष्करत्वाद् दुर्बोधत्वात् कठोरत्वाच्च काव्यमेतत् लोकोत्तरबुद्ध्या अतिश्रमेण च साध्यमिति सर्वस्वीकृतम् । अस्मिन् विषये भोजदेवः पर्याप्तमुक्त्वापि न सन्तुष्टः । एवं 'शेषमूह्यं महात्मभिः'[2] इत्यनेन चित्रस्यानन्त्यं द्योतयति । अस्पष्टाविवेचितचित्राणां परिकल्पने कवयः स्वतन्त्रास्तेभ्यो यच्चित्रं रोचते तत्ते परिकल्पन्ते ।

कविर्दैवज्ञसूर्यः 'रामकृष्णविलोमकाव्ये' एकत्र कथयति यत् चित्रबन्धरचनायां छन्दःपूरणे बाधा, साकांक्षताया अभावः कथाप्रवाहनिर्वाहकाठिन्यम् एवं प्रायः विसङ्गतयः समागच्छन्त्येव ।

---

१—शिशुपालवधम् १९।४१

२—सरस्वतीकण्ठाभरणम् २।१३०

चित्रबन्धरचनायां सामान्येन अनुचितं प्रतीयमानानामपि अंशाना-मौचित्यम् आचार्यपिङ्गलेन प्रतिपादितम् । चित्रकाव्ये यमके च प्रायः न रसः सम्यक् परिपुष्टिमेति । दुष्करत्वादसाधुत्वाच्चात्र सम्भाव्यते एतत्तत्वं विद्याधरेण उररीकृतम् । स रलयोः, डलयोः लयोः बवयोः, नमयोः नणयोः, विसर्गाविसर्गयोः, सबिन्दुकाबिन्दुकयोः अभेदकल्पनं क्षम्यं कथयति ।[1]

## ग्रन्थकृत् टीकाकृच्च

चित्रबन्धरामायणस्य चित्रकाव्यत्वेन तु वैशिष्ट्यमस्ति परम् एकमपरं वैशिष्ट्यं ध्यातव्यमेव । काव्यस्यास्य कर्ता श्रीवेङ्कटेश्वरः व्याख्याकारश्चास्य श्रीयज्ञनारायणभट्टः कवेः साक्षाज्जनको वर्तते । एतत्तथ्यं टीकायां श्रीयज्ञनारायणभट्टेन स्वयमेवोररीकृतम्—

"स्वपुत्ररचितं चित्रबन्धरामायणाह्वयम् ।
व्याकरोति महाकाव्यम् यज्ञनारायणः सुधीः ।।

अपि च इदं काव्यं वेङ्कटेशेन कविना·········कृतमिति बोध्यम् ।"

संस्कृतवाङ्मये अल्पसंख्याकानि एव एतादृशानि महाकाव्यानि वर्तन्ते यत्र महाकाव्यस्य तट्टीकायाश्च परस्परं कर्तृत्वेन जन्यजनकः सम्बन्धः दृश्यते । कविः प्रतिसर्गान्ते महाकाव्यस्य पुष्पिकायाम् आत्मख्यापनं करोति —

"इति श्रीचरकूरिकोण्डुभट्टोपाध्यायपौत्रेण यज्ञनारायणभट्टतनयेन वेङ्कटेश्वरेण सर्वाम्बिकागर्भशुक्तिमुक्तामणिना विरचिते रामायणे महाकाव्ये ··· ·····सर्गः ।"

पुष्पिकया सूच्यते यद् वेङ्कटेशः चरकूरिकुलस्यांशभूतः । एवं कथयन् स गौरवमनुभवति । पितामहः श्री कोण्डुभट्टः पिता श्री यज्ञनारायणभट्टः माता चास्य सर्वाम्बिका देवी । कविरतिस्वाभिमानी प्रतीयते तस्मादेव आत्मानं सर्वाम्बिकागर्भशुक्तेः मुक्तामणित्वेन व्याहरति । अनेन एकमपरं तथ्यं

---

१—एकावली ७।५-७

सिद्ध्यति यत् सः स्वजनन्याः विशिष्टस्नेहभाजनमासीत्। माता अस्य कुलीना लब्धप्रतिष्ठा चासीत् तस्याः नामोल्लेखः कविना गर्वेण कृतः। अल्पैरेव कविभिरेवं क्रियते। चित्रबन्धरामायणस्य टीकां कुर्वता कवेः पित्रा व्याख्यायामादावेव वेङ्कटेश्वरः चरकूरिकुलस्येन्दुः कथितः। वेङ्कटेश्वरस्य प्रपितामहादयः चरकूरिकुलस्यासन्। चरकूरिकुलं मूलतः दक्षिणभारतस्यैव कृष्णनगरे उवास। कवेः वेङ्कटेश्वरस्य पूर्वजाः अत्र परस्परं पितृक्रमेण कथ्यन्ते—

वेङ्कटेश्वरस्य पिता श्री यज्ञनारायणः (यज्ञेश्वरः) तस्य कोण्डुभट्टः कोण्डुभट्टस्य यज्ञेश्वरः, तस्य तिम्मयसोमयः बभूव।

पूर्वजानां नाम्ना वेङ्कटेश्वरः वैष्णवसम्प्रदायदीक्षितः प्रतिभाति। कवेः प्रपितामहसहोदरस्यापि नाम लक्ष्मीधर आसीत् यस्तु प्रव्रजिते रामानन्द स्वामिनाम्ना ख्यातिं लेभे।

वेङ्कटेश्वरः चित्रबन्धरामायणस्य कविः तस्य पिता च यज्ञनारायणः ग्रन्थस्य व्याख्याकारः इत्यस्मिन् विषये न कोऽपि विसंवादः। तथ्यमिदं कृष्णमाचार्यमहोदयेनापि निर्णीतचरम्। चित्रबन्धरामायणं वेङ्कटेश्वरेण १५५७ शक संवत्सरे तदनुसारं १६३५ ख्रीष्टाब्दे विरचितम्। थियोडर आउफ़्रैष्ट महोदयः स्वीकरोति यत् यः वेङ्कटेश्वरः चित्रबन्धरामायणस्य कर्ता स एव अधोलिखितानामपि ग्रन्थानां कर्ता। ते च ग्रन्थाः दृश्यश्रव्यकाव्यविषयका यथा—

(१) उन्मत्तप्रहसनम्
(२) कृष्णराजविजयम्
(३) श्री चित्रबन्धरामायणम्
(४) भानुप्रबन्धप्रहसनम्
(५) राघवानन्दनाटकम्
(६) रामाभ्युदयकाव्यम्
(७) वेङ्कटेश्वरीयकाव्यम्

उपर्युक्ताः ग्रन्थाः कविप्रतिभासंरम्भप्रकाशकाः। ग्रन्थानां नामभिश्चापि कविः वैष्णवः प्रतीयते। लक्ष्मीपदेनैव चित्रबन्धरामायणं प्रारभते। प्रतिसर्गान्ते च लक्ष्मीपदं नियोजयति। कविजनकेन टीकायाम् उक्तं यत्—

"अत्र वेङ्कटेश्वरनामा महाकविः.........स्वेष्टदेवताप्रार्थनारूपं मङ्गलमादावाचरति इति" एतेन प्रकटितं यत् लक्ष्मीं प्रति कवेरनन्या भक्तिः।

श्री चित्रबन्धरामायणस्य टीकाकारःकवेः पिता श्री यज्ञनारायणः टीकायाः पुष्पिकायां कथयति यत् सः कोण्डुभट्टोपाध्यायस्य पुत्रो वर्तते। वेङ्कटेश्वरः स्वपितरं नमस्कुर्वन् तम् यज्ञेश्वराह्वयम्[1] कथयति किन्तु पिता यज्ञनारायणः स्वयमेवात्मानं एतच्छ्लोकं व्याकुर्वन् एकत्रैव यज्ञनारायणभट्टः यज्ञेश्वरश्च पर्यायभूतेन नामद्वयेन[2] कथयति। यज्ञनारायणः स्वपुत्रकृतस्य चित्रबन्धरामायणस्य बालप्रबोधाख्यां व्याख्यामकरोत्। सकलेऽपि दुर्गमशास्त्रे सः अप्रतिहतगतिरासीत्। तेन शास्त्राणि नाटकीकृतानि। अपूर्वचन्द्रोदय-शब्दोदय-न्यायविजयादिनाटकानि तेन सकलशास्त्रप्रमेयानुसारं विरचितानि। स्तोत्ररत्नाकरः, चूडामणिः विवरणोज्जीवनमित्यभिधाः ग्रन्था अपि तेन विरचिता इति स्वयमेवोक्तम्।

यज्ञनारायणस्य पितुः विषये श्री के० वी० कृष्णमाचार्येण भ्रान्तिः समुपस्थापिता। तस्य संस्कृतसाहित्यस्य इतिहासविषयकात् प्रसिद्धग्रन्थाद्[3] वयं सूचिता यद् यज्ञनारायणः तञ्जौरमहाराजस्य रघुनाथस्य आश्रितः व्युत्पन्नः कविरासीत्। तत्कृतेन रघुनाथविलासनाटकेन तस्य नायककुलस्य च परस्परं सम्बन्धः द्योत्यते। श्री यज्ञनारायणस्य पिता गोविन्दमहोदयः तञ्जौर महाराजयोः चेवप्पा-अच्युतयोः प्रधानमन्त्री पदमलञ्चकार। तत्रैव यज्ञनारायणस्य चतस्रः कृतयः कथिताः—

---

१—चित्रबन्धरामायणम् १।३

२—चित्रबन्धरामायणटीका १।३

३—"History of Classical Sanskrit Literature" १५० तमः अनुच्छेदः

१—साहित्यरत्नाकरः—त्रयोदशसर्गात्मकं काव्यम् ।

२—रघुनाथविलासः—पञ्चाङ्कपरिमितं रूपकम् ।

३—रघुनाथभूपविजयम्—तञ्जौरनायककुलस्य माहात्म्यवर्णनम् । श्रीलङ्कासमीपस्थस्य कस्यचित् द्वीपस्योपरि रघुनाथविजयवर्णनम् ।

४—श्री चित्रबन्धरामायणटीका ।

किन्तु ६६६ तमे अनुच्छेदे कथयति यत् कोण्डुभट्टस्य पुत्रेण यज्ञेश्वरेण (१५५७ तमे शकसंवत्सरे तदनुसारं १६३५ तमे खीष्टाब्दे) स्वपुत्ररचितस्य चित्रबन्धरामाणस्य व्याख्या कृता । तत्र यज्ञेश्वरस्य अलङ्काररराघवालङ्कारसूर्योदयौ ग्रन्थौ सूचितौ । यज्ञेश्वर एव यज्ञनारायण इति पूर्वमेव विवेचितम् ।

कोऽयं गोविन्दपुत्रः यज्ञनारायणः येन स्वपुत्ररचितस्य चित्रबन्धरामायणस्य टीका विरचिता । मन्ये अत्र श्रीमद्भिः कृष्णमाचार्यैः कुतश्चिद् भ्रमो लब्धः । अथवा गोविन्दपुत्रः यज्ञनारायणः कोऽप्यन्यः यस्य, यत्पुत्रस्य पुत्ररचितग्रन्थस्य च नामानि क्रमेण कोण्डुभट्टपुत्रेण यज्ञनारायणेन, तत्पुत्रेण वेङ्कटेश्वरेण तदीयग्रन्थेन च समानतां भजन्ते । किन्त्वस्मिन् विषये केवलमैतिहासिकस्य भ्रान्तिमेव पश्यामः । यतोहि उभयत्र ग्रन्थे तट्टीकायां च यज्ञनारायणस्य पितृत्वेन गोविन्दमहोदयस्य नामापि न प्राप्यते । सर्वत्र पुष्पिकायां कोण्डुभट्टोपाध्याय एव यज्ञनारायणस्य पिता वेङ्कटेश्वरस्य पितामहः संसूचितः । पुत्रक्रमेण रेखाद्वारा चरकूरिकुलस्य संकेतः दीयते—



कोण्डुभट्टोपाध्यायपुत्रयज्ञनारायणविरचिता ग्रन्थाः अन्तःसाक्ष्येण (चित्रबन्धरामायणेन तट्टीकया च) एवं प्राप्यन्ते—

१—अपूर्वचन्द्रोदयः
२—शब्दोदयः
३—न्यायविजयम्
४—स्तोत्ररत्नाकरः
५—चूडामणिः
६—विवरणोज्जीवनम्
७—चित्रबन्धरामायणव्याख्या

बहिःसाक्ष्येण येऽपरा ग्रन्थास्तेऽत्र त्रिसंख्यकाः—

१—अलङ्काररत्नाकरः
२—अलङ्कारराघवः
३—काव्य प्रकाशटीका

यज्ञनारायणभट्टः १६०० खीष्टाब्दस्य किञ्चित्प्राक् ईषत्पश्चाद्वा बभूव ।

श्री चित्रबन्धरामायणव्याख्या यज्ञनारायणेन कवेः पितृवर्येण स्वयमेव कृता । व्याख्या बालप्रबोधाख्या इति पुष्पिकया स्पष्टम् । चित्रबन्धरामायणस्य सम्पूर्णा व्याख्या अद्यावधि नोपलब्धा । तेलगुलिपिमातृकायां पञ्चमसर्गस्य पञ्चमश्लोकपर्यन्तं, देवनागर्यां च केवलं चतुःसर्गपर्यन्तमस्य टीका प्राप्यते । टीका सम्पूर्णकाव्यं च उभावेव केवलं सरफोजी इत्याख्यस्य महाराजस्य सरस्वतीमहलपुस्तकालये सुरक्षिते वर्तेते । इदानीमपि अस्य अन्या प्रतिः नान्यत्र कुत्रचित् ज्ञायते । एकत्रैव ग्रन्थस्य संस्थितिः, चतुःसर्गपर्यन्ता टीका, टीकाकारश्च कवेः पिता इति सर्वमेव तथ्यं चिन्त्यम् । सम्भाव्यते यद् यज्ञनारायणः वेङ्कटेश्वरस्य पिता स्वात्मजरचितकाव्यस्य व्याख्याकाले पर्याप्तजराजर्जरितदेह आसीत् । पञ्चमसर्गस्य पञ्चमश्लोकपरिमितां व्याख्यां विधाय रुजा वार्धक्येन वा एतावानशक्तो जातो यत् अतोऽधिकां व्याख्यां कर्तुं न शशाक । कालकवलितो दिवङ्गतो वा । एतच्चिन्तनं नाधिकमसङ्गतं यत् पुत्रस्य परिपक्वे जाते पितुः वार्धक्यसम्भवत्वाद् व्याख्या-

परिपूरणे बाधा भवितुं शक्यत एव। सम्प्रति यद्यवशिष्टाऽपि टीका स्याच्चेत् साऽवश्यमन्वेषणीया।

## श्री चित्रबन्धरामायणम्

श्री चित्रबन्धरामायणमिति नाम्नैव ज्ञायते यद् रामायणेऽस्मिन् वैशिष्ट्येन चित्रबन्धाः प्रस्तुताः चित्रबन्धमाध्यमेन वाखिलं रामायणमत्र निगदितम्। यद्यपि न सर्वे श्लोकाः बन्धमयास्तथापि आधिक्येन ते यस्य कस्यापि बन्धस्य प्रतिनिधिभूताः। 'प्राधान्येन व्यपदेशा भवन्तीति राद्धान्तेन ग्रन्थाभिधानमुचितमेव।

लक्ष्मीशारदास्तुतिपूर्वकोऽयं ग्रन्थ आरभते। परञ्चकविः स्वपितरं यज्ञेश्वरं नमस्करोति। विघ्नविघाताय ग्रन्थादौ[1] मङ्गलं कर्तव्यमिति कविना कविपरिपाटीमनुसरता सदाचारो विहितः। अत्र न केवलं लक्ष्मीपदेन काव्यारम्भः कृतः परं च प्रतिसर्गान्तिश्लोके एतच्छुभावहं पदं राराजते। अनेन भारवेः[2] माघस्य[3] च समः वेङ्कटेश्वरस्यापि लक्ष्मीपदानुरागातिशयः सिद्ध्यति।

आदौ रामकथाश्रितमिदं महाकाव्यम् अयोध्यापुरीवर्णनपुरस्सरं सर्वसुखसम्पन्नमपि महाराजं दशरथं सुतविषयिण्यां चिन्तायां निमग्नं प्रदर्शयति। ततः विविधप्रयत्नेन यज्ञानन्तरञ्च दशरथानन्ददायकाः रामचन्द्रादयश्चत्वारस्सुताः सञ्जाताः। पुनश्च आर्षरामायणस्य घटनाक्रमेण रामस्य सीतालक्ष्मणाभ्यां सह वनगमनम्, रावणेन सीताहरणम्, हनूमतः साहाय्येन सुग्रीवेण सह राममैत्री, रावणस्य हननम्, सीतया सह अयोध्यागमनम्, रामस्य राज्याधिरोहणमिति नातिविस्तृतं कथितम्।

एतां रामायणीं कथां कविः यत्र तत्र ईषद्भेदसहितं षट्सर्गपरिमितं वितनोति। सर्गाणां नामानि बालकाण्डप्रभृतीनि एव कृतानि। षष्ठ-

---

१—"मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्ति, आयुष्मत्पुरुषाणि चाध्येतारश्च सिद्धार्था यथा स्युरिति।"

महाभाष्यम् १।१।१

२—श्रियः कुरूणामधिपस्य पालिनीं'''। किरातार्जुनीयम् १।१

३—श्रियः पतिः श्रीमति शासितुं जग''''। शिशुपालवधम् १।१

सर्गादृते नैकोऽपि सर्गः नवत्यधिकान् श्लोकान् प्रस्तौति। षष्ठे एव केवलं शतोत्तरसप्तविंशश्लोकाः। तस्मादेव नायं ग्रन्थः आकारेण गौरवं भजते। रामकथाया लघु वर्णनमस्य रहस्यम्। कविः यथेष्टं स्वाभीष्टं बन्धं हृदयहारित्वेन समुपस्थापयति। यत्र रामकथा निर्झर इव प्रवहति तत्र महाकविः बन्धाद्विमुच्यते। न तु दुराग्रहेण बन्धबद्धचेतसा श्लोकं चिनोति।

सप्तसंख्यका एकाक्षरश्लोकाः कविना विरचिताः एतावन्तः एकाक्षर-श्लोकाः कवेः पाण्डित्यं प्रकटयन्ति। येन वेङ्कटेश्वरः साहित्यकोषव्याकरण-पारङ्गतवान् इति सिद्ध्यति। प्रतिसर्गे एकाक्षरश्लोकः प्राप्यते। पृथक्तया क-त-म-श-र(ल)-प-ह वर्णाश्रिताः पद्या दृष्टिगोचरा भवन्ति। द्व्यक्षर-त्र्यक्षर-चतुरक्षरश्लोका अपि सन्ति। गोमूत्रिकाबन्धा अपि षोडशसंख्यकाः। प्रतिपदभित्तिलोमकं पर्याप्तमाकर्षकं यत्र पतिपदं प्रातिलोम्येन संस्थितानां पदानां चयनमद्भुतमेव। तथैव अर्धपाद-पादप्रतिलोमौ च मनोहरौ। प्रतिलोमबन्धाः पठनकाले विशिष्टाकर्षकगतिसंवलिता इत्यत्र चित्रबन्धे बद्धचित्ता एव प्रमाणभूताः। श्लोकप्रतिलोमयमकमपि एवमेव।

निखिले महाकाव्ये यमकमात्मनो वैभिन्न्येन कलासाकल्येन चात्र कविकौशलं भासतेतराम्। निरोष्ठ्यम् ओष्ठ्यक्षरम् च बन्धौ आयास-सहितावपि रमणीयौ। खड्ग-गोमूत्रिका-मुरज-सर्वतोभद्रादिप्रसिद्ध-बन्धातिरिक्तं आन्दोलिका-कङ्कण-छत्रहर-नाग-लघुचक्रादयोऽपि प्रस्तुताः। एते बन्धा षष्ठे सर्गे एव विहिता यस्य च टीका दुर्भाग्यवशान्नोपलभ्यते।

कतिपयेषु स्थलेषु बुधानां मनोरञ्जनाय बुद्धिविलासाय च क्रियागोपनं कृतम्। वैदिकश्चतुर्थपादयुक्तश्लोकेषु कविः सुकौशलेन श्लोकस्य चतुर्थपादं वैदिकमन्त्रांशेन पूरयति। एवं स्वबुद्धिमहिम्ना कविः वैदिकमन्त्रांशं पादत्रयेन एवं विधेन संयोजयति यदवैदिको जनः सूचनां विना भेदज्ञानेऽसमर्थः वैदिकश्च मोदते। चतुर्थसर्गातिरिक्तं सर्वे सर्गाः एवं विधेन पद्येन युताः।

चित्रबन्धरामायणे वर्णस्थानस्वराकारगतिबन्धेषु ये ये बन्धाःकविना वेङ्कटेश्वरेण रचितास्ते सर्वे प्रतिवर्णोपरि कवेः सर्वाङ्गीणमधिकारं प्रमाणयन्ति। काव्ये सर्वत्र वेङ्कटेश्वरः वर्णैः क्रीडन्निव दृश्यते।

विषयवर्णने चरित्रचित्रणे, प्रकृतिवर्णने, महाकविः निपुणः । अर्थान्तरन्यासेन, निदर्शनेन उत्प्रेक्षया च कवेः सूक्ष्मा दृष्टिः, लोकजीवनस्य प्रकृष्टोऽनुभवः, सहृदयत्वं च सिद्धयति । चित्रबन्धरामायणे यत्र तत्र लोकरीतिः निदर्शनेन परिलक्षिता भवति ।

**श्रेयांसि बहुविघ्नानि**

मर्यादापुरुषोत्तमस्य भगवतो रामस्य जीवनचरितमभिलक्ष्य कृतस्यास्य श्रीचित्रबन्धरामायणस्य मातृका तञ्जावूरनगरे सरस्वतीमहलग्रन्थालये सुरक्षिता वर्तते । विद्यापीठस्यास्य प्राचार्याणां डॉ० गयाचरणत्रिपाठिचरणानां महता प्रयत्नेनास्य मातृका ततः माइक्रोफिल्मरूपेण प्राप्ता । मातृकेयं देवनागराक्षरे प्राप्ता । महत्सौभाग्यविषयोऽयं यदप्रकाशितमेकं काव्यं सहृदयानां काव्य-पिपासूनां दृष्टिगोचरतामियात् किन्तु यावदालोचनात्मकाय पाठभेदात्मकाय च सम्पादनाय रामायणस्यास्य तेलगुलिपिबद्धाया अपरमातृकाया आवश्यकता समुपस्थिता तावत्तु सरस्वतीमहलग्रन्थालयस्य सर्वाः परिस्थितय एव परिवर्तिताः । १९८६ तमे ईशवीयवत्सरे तत्र गत्वा अनल्पे यत्ने कृतेऽपि केवलं नैराश्यमेव मयावाप्तम् । तदा निदेशकविहीने तस्मिन् संस्थाने ग्रन्थस्य दर्शनस्यापि व्यवस्था न जाता । तत्रत्यैः कार्यकारिभिरधिकारिभिः केवल-मयमेवोद्घोषः कृतो यद् ग्रन्थोऽयम् इदानीमस्माभिः प्रकाशयिष्यते तस्मान्न दीयते इति । अस्मत् प्राचार्यवर्यैः डॉ० गयाचरणत्रिपाठिभिः संस्थाध्यक्षत्वेन बहुतर्कसम्मते पत्रव्यवहारे कृतेऽपि नानुकूलं फलमासादितम् ।

वस्तुतः अतर्कसम्मतमेतत् सर्वमासीद् यत् सम्पादनाय पूर्वप्रदत्तस्य ग्रन्थस्यापरा मातृका पुनर्न दीयते स्म । तमिलनाडुप्रदेशे साम्प्रतं संस्कृत-विषयकाः ग्रन्थाः प्रकाशनविषये न तावन्तः सौभाग्यमण्डिताः यावन्तः तमिल-विषयकाः । अत एव उपेक्षिता इव । अत्रत्येन संग्रहाध्यक्षेणापि ग्रन्थस्य अपरमातृकायास्ततः प्रापयितुं नानुकूलः सहयोगो विहितः । पत्रव्यवहारे पुनः स्मारकपत्रप्रेषणे अतीव शैथिल्यं तेन प्रदर्शितम् । तस्मादपि ग्रन्थस्य प्रकाशने विलम्बो जातः ।

प्राप्ते १८८९ तमे ईशवीयवत्सरे एकवारं पुनः अस्यैव कृते तञ्जावूरं गत्वा प्रयतितम् । किन्तु तावत् निदेशकविहीने तस्मिन् ग्रन्थालये न कश्चित्

संस्कृतस्य संस्कृतविषयकग्रन्थानां च समुद्धारकः सर्वकारेण प्रतिनियुक्तः। संस्कृतविषये यत्क्रियते तत्तु भाषणमात्रं मिथ्याप्रदर्शनमात्रञ्च। निरन्तरं वर्षत्रयेऽपि संस्कृतस्य शुभचिन्तकः निदेशकः न नियुक्तोऽतः तत्रत्यैरधिकारिभिः न कोऽपि उत्साहः विद्यापीठेनानेन प्रकाश्यमानस्य ग्रन्थस्यास्य पाठभेदकृते सहयोगरूपेण प्रदत्तः। केवलमभीष्टमातृकादर्शनसौविध्यप्रदानाय येन केन प्रकारेण ते सहमता जाताः।

एतावतीमेव सुविधामवाप्य मया स्वशुभचिन्तकानां डॉ० क० इ० गोविन्दन् महाभागानां साहाय्येन तस्यैव सर्गद्वयस्य पाठभेदाय प्रथमं प्रयत्नः कृतः यस्य टीकापि न समुपलभ्यते। अपरपाठस्य टीकायाश्चाभावे एकाक्षर-द्वयक्षरादिपद्यमयस्य चित्रकाव्यस्य बुद्धिप्रधानवर्णविन्यासमयस्य सम्पादने दुष्करतैवेति।

यद्यपि सरस्वतीमहलग्रन्थालयस्य उच्चाधिकारिणां सहयोगाभावान्न सम्पूर्णग्रन्थस्य साधीयान् पाठभेदः जातः तथापि तत्र गत्वा अल्पकालेनैव दत्तावधानेन मया यत्किञ्चिदासादितं तेन अनेका दुरूहतमाः भ्रमोत्पादिकाश्च ग्रन्थयः समुन्मोचिताः। १९८६—१९८९ तमयोः वत्सरयोः तत्रत्यैरधिकारिभिः यदनधिकारिकः सौहार्दपूर्णः सहयोगः कृतः तच्चिरस्मरणीयमभिनन्द्यं च।

श्री चित्रबन्धरामायणस्य सम्पादनस्य चरमोत्कर्षे स्वकीये विद्यापीठे एव सुरक्षितायाः मातृकायाः यदा पुनः आवश्यकता समुदिता तदा तु संग्रहालयाध्यक्षः पुनः पुनरुक्तोऽपि तां नाददात्। तथापि पूर्वप्रदत्तसौविध्ये-नैवात्मानमुपकृतं मन्ये। एतादृशीषु सत्स्वपि अवस्थासु विदुषां सहृदयानां नवनवकाव्यपिपासूनां भगवच्चरणेषु दत्तचित्तानामक्ष्णोः साक्षीक्रियते काव्यमिदम्।

**कृतवेदितावेदनम्**

भगवतो रामस्य जीवनं प्रतिपदं कण्टकाकीर्णमासीत्। मन्ये तस्मादेव कारणात् सम्पाद्यमानेऽस्मिन् कार्ये सर्वदा प्रत्यूहप्रस्तरोऽनुभूतः किन्तु गुरुकृपया उत्साहभङ्गो न जातः। एतत् सर्वमाकलय्य विपश्चिद्भिः दोषास्तावत्सोढव्याः यावत्तानपाकर्तुं परिस्थितिः नानुकूलतामियात्। एतत्पूर्वं

रामायणस्यास्य सम्पादने रताः पश्चाच्च विरताः सर्वेऽपि जना धन्याः ये मामेवं कर्तुं प्रैरयन् ।

अन्ताराष्ट्रियविद्वत्परिषदि प्रथितयशसां पौरस्त्यपाश्चात्यगवेषण-विधिविदग्धानाम् अधीतानेकविद्यावदातचेतसां पवित्रीकृतापरचेतसां, भारतीयविद्याभारतानां विद्यापीठस्य प्राचार्यपदमलङ्कुर्वाणानां गुरुचरणानां त्रिपाठ्युपाह्वययुतानां डॉ० गयाचरणानां चरणयुगलाय प्रसन्नतापूरितान्तः-करणेन विनयावनतेन मूर्ध्ना प्रणतिततयः समर्पयन्नतीव सौभाग्यमनुभवामि ।

ग्रन्थस्यास्य प्रकाशनाय स्वीकृतिप्रदातृभ्यः राष्ट्रियसंस्कृतसंस्थानस्य निदेशकमहोदयेभ्यः प्रकाशनसमितेः विद्वद्भ्यश्च कार्तज्ञ्यार्पणं कुर्वन्नात्मानं धन्यं मन्ये ।

श्री चित्रबन्धरामायणस्यास्य हेतवे सुसहयोगं दातुकामा मे सदया दयिता कदापि न निवारिताऽतः सा चरितार्थनाम्नी मदीया भार्या सौभाग्यवती कुसुमदेव्यपिएतदर्थं यत्क्लेशमन्वभवत् तदर्थं तां प्रति स्वामधमर्णतां स्वीकरोमि ।

रामायणमेतदुद्धर्तुं कृतसङ्कल्पे मयि सदाशयाः डॉ० क० इ० गोविन्दन् महाभागाः मया सार्धं १९८९ तमे ईशवीयवत्सरे तञ्जावूरं गत्वा एतद्रामायणस्य तदा दर्शनमात्रफलामपरां मातृकां प्रापयितुं यत्साहाय्यं कृतवन्तः तदर्थं ते सर्वदैव स्मरणीयाः धन्यवादार्हाश्च ।

सम्यगधीतसाहित्यत्वात् समुदारचेताः सहृदया विद्वच्छिरोमणयः प्रयागविश्वविद्यालयस्य पूर्वतनविभागाध्यक्षाः गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठस्य चूडामणिप्राध्यापकाः प्रो० चण्डिकाप्रसादशुक्लमहोदयाः भूयां-स्याशीर्वचांसि प्रदाय यदुपकृतवन्तस्तेषां कृते श्रद्धावनतं मे मनः ।

विविधशास्त्रपारङ्गताः चूडामणिप्राध्यापकाः डॉ० चन्द्रभानुत्रिपाठिनः, उज्जयिनीस्थ सिन्धियाप्राच्यविद्याशोधसंस्थानस्य निदेशकाः डॉ० रुद्रदेव त्रिपाठिनश्च ग्रन्थग्रन्थिविमोचनार्थविहितानुग्रहार्थं सादरं प्रणम्याः ।

डॉ० किशोरनाथ झा—शिमलाविश्वविद्यालयस्य संस्कृत विभागाध्यक्षः

प्रो० राजेन्द्र मिश्रः— डॉ० आजाद मिश्रमहाभागाः मर्यादापुरुषोत्तमस्य श्री चित्रबन्धरामायणकृतावस्मिन् स्वस्नेहेन यथावसरं सम्मिलिताः। ते सर्वे विद्वांसः भूयो भूयोऽभिवन्द्याः।

विद्यापीठस्यास्य शोधपत्रिकायाः वैदुष्यपूर्णसम्पादनेन भुवि सुख्याताना वेदविभागाध्यक्षाणां डॉ० माया मालवीयानां स्नेहेन प्रथमेऽपि प्रकाशने न क्लेशलेशयुतोऽभवमतस्ताः मुहुर्मुहुः प्रणमामि।

स्वाभिरुचिपूर्वकं विविधसहयोगप्रदानपुरस्सरं सहयोगं कुर्वद्भ्यः सुहृद्वर्येभ्यः पाण्डेयोपनामयुतेभ्यः डॉ० प्रकाशेभ्यो भृशं धन्यवादं ज्ञापयामि।

पुस्तकालयविभागीयः प्रत्येकं जनः प्रशंसनीयः सर्वदैव यः सम्बद्ध-पुस्तकादिप्रदानपूर्वकमुपाकरोत्।

अल्पेनापि कालेन मनोहरमुद्रणार्थं शाकुन्तलमुद्रणालयाधिपान् श्रीयुतान् उपेन्द्रत्रिपाठिमहाभागान् च साधुवादेनासकृत् सम्भावयामि।

विजयादशमी, सं० २०४८ — विदुषामाश्रवः

१८-१०-१९९१ — सत्यव्रत त्रिपाठी

अथ

श्रीवेङ्कटेश्वरविरचितम्

# ।। चित्रबन्धरामायणम् ।।

## श्रीयज्ञनारायणभट्टकृतबालप्रबोधाख्यव्याख्योपेतम्

## प्रथमः सर्गः

।। श्रीगणेशाय नमः ।।

लक्ष्मीकटाक्षा मयि ते प्रसरन्तु समन्ततः ।
येषां महिम्ना जगतामीश्वरोऽभूज्जनार्दनः ।। १ ।।

पूर्तये सम्पदां चारुकीर्तये दलितार्तये ।
दक्षिणामूर्तये नित्यं नमोऽस्तु शिवमूर्तये ।। १ ।।
विहताक्षरणद्यूतमन्याधूतं विभूतये ।
सम्पद्दूतं महद्भूतं रामदूतं नमाम्यहम् ।। २ ।।
स्वपुत्ररचितं चित्रबन्धरामायणाह्वयम् ।
व्याकरोति महाकाव्यं यज्ञनारायणः सुधीः ।। ३ ।।
अवस्थानेऽपि जिह्वाग्रे शब्दालङ्कारशास्त्रयोः ।
बुधानां सुखबोधार्थमर्थमात्रं विलिख्यते ।। ४ ।।

अत्र वेङ्कटेश्वरनामा महाकविः स्वप्नप्रसन्नभ्रमराम्बिकावरप्रसादलब्धसहजसारस्वतः चित्रबन्धरामायणाख्यं काव्यं व्याचिकीर्षुः 'काव्यं यशसेऽर्थकृते' इत्यालङ्कारिकपरिपाटीमनुसरन् 'काव्यालापांश्च वर्जयेदित्यसत्काव्यविषयतां च पश्यन् चिकीर्षितस्य काव्यस्य निर्विघ्नपरिसमाप्त्यर्थं प्रचयगमनाय च स्वेष्टदेवताप्रार्थनारूपं मङ्गलमादावाचरति ।

**लक्ष्मीति**। ते वक्ष्यमाणमहिमसम्पन्ना लक्ष्मीकटाक्षाः मयि समन्ततः प्रसरन्तु। तेषां सामर्थ्यमेव प्रकटयति। येषामिति। येषां लक्ष्मीकटाक्षाणां महिम्ना जनार्दनोऽपि जगतामीश्वरोऽभूत् किं पुनर्ब्रह्मेन्द्रादय इति भावः। इदं काव्यं वेङ्कटेशकविना काव्यादिश्लोके सर्गान्तश्लोकेषु च लक्ष्मीपदाङ्कितं कृतमिति बोध्यम् ॥१॥

**शारदा शारदाकाशनीरदाकारशालिनी।**
**श्रितस्य रसनारङ्गे लास्यलीलाः क्रियात्सदा ॥२॥**

(निरोष्ठ्यम्)

**शारदेति**। शरदकालसम्बन्धी शारदः स चासावाकाशश्च तस्मिन् यो नीरदो मेघः तस्याकारेण शालितुं शोभितुं शीलमस्यास्तीति शालिनी शरत्कालमेघपाण्डुरेत्यर्थः। तादृशी शारदा। श्रितस्य ममेति शेषः। रसना जिह्वा सैव रङ्गस्थलं तस्मिन् सदा लास्यलीला नृत्तविशेषलीलाः क्रियात् करोत्वित्यर्थः। करोतेराशीर्लिङ् ॥२॥

**नाटकीकृतषट्शास्त्रं स्तोत्ररत्नाकराकरम्।**
**चूडामणिकृतं वन्दे तातं यज्ञेश्वराह्वयम् ॥३॥**

इष्टदेवताप्रार्थनं कृत्वा 'यस्य देवे पराभक्तिरिति न्यायमनुवृत्य पितरं नमस्करोति—**नाटकीकृतेति**। अनाटकानि नाटकानि सम्पद्यमानानि कृतानि नाटकीकृतानि षट्शास्त्राणि येन सः तथोक्तः तम्। ***अपूर्वचन्द्रोदय-शब्दोदय-न्यायविजयादि***सकलशास्त्रप्रमेयानुसारिनाटककर्तारमित्यर्थः ***स्तोत्ररत्नाकरो*** नाम सकलदेवतास्तुतिपरः यज्ञनारायणभट्टकृतः कृतिविशेषः तस्याकरः स्थानं तत्कर्तारमित्यर्थः। *चूडामणिर्नाम चिन्तामणि*खण्डनपरो ग्रन्थविशेषः शास्त्रचूडामणिरित्यर्थः। तं करोतीति चूडामणिकृत् तम्। इदमुपलक्षणं *विवरणोज्जीवनादि*महाग्रन्थकर्तारमपि बोध्यम्। तादृशं यज्ञेश्वराह्वयम् तातं पितरं वन्दे ॥३॥

**वेङ्कटेशेन कविना चरकूरिकुलेन्दुना।**
**रामायणं कविप्रीत्यै चित्रबन्धैर्निबध्यते ॥४॥**

इदानीं स्वचिकीर्षितं प्रतिजानीते-वेङ्कटेशेनेति । चरकूरिकुलस्येन्दुः श्रेष्ठः, तेन वेङ्कटेशेन वेङ्कटेश्वरनामधेयेन कविना, कविप्रीत्यै कविसन्तोषाय । चित्राश्च बन्धाश्च ते चित्रबन्धाः *मुरजबन्धसर्वतोभद्रबन्धादि*-नानाविधबन्धा इत्यर्थः । इदमन्येषां शब्दचित्राणामप्युपलक्षणं तैर्निबध्यते क्रियते । बन्धः कर्मणि लट् ॥४॥

**साकेतसंज्ञानगरी नगरीति गृहोज्ज्वला ।**
**इहास्ति भूरिवरणावरणा धरणीतले ॥५॥**

(सन्दष्टयमकम्)

कथामुपक्रमते—साकेतेति । इह धरणीतले नगानां रीतिरिव रीतिर्येषां ते नगरीतयः पर्वतसमा इत्यर्थः । ते च ते गृहाश्च तैरुज्ज्वला, भूरि अधिकं वरणावरणं प्रकारावरणम् 'प्रकारो वरणः साल' इत्यमरः । तद्यस्या सा तथोक्ता अयोध्यानामेत्यर्थः । नगरी अस्ति । सन्दष्टयमकम् ॥५॥

**यत्र भ्रमन्त्यः संरेजुर्दारुयन्त्रे नृपाङ्गणे ।**
**मेरुप्रदक्षिणरता गणिकास्तारका इव ॥६॥**

षड्भिः श्लोकैरयोध्यामेव वर्णयति—यत्रेति । यत्र अयोध्यायां नृपाणां राज्ञाम् अङ्गणे गृहाङ्गणे दारूणां यन्त्रे दारुयन्त्रे तन्तुनिर्माणयन्त्रवत् भ्रमणपरे यन्त्रविशेष इत्यर्थः । तत्र भ्रमन्त्यः गणिकाः मेरोः प्रदक्षिणं तत्र रता निरतास्तारका इव रेजुः मेरुदृष्टान्तेन दारुयन्त्राणामतिसौन्दर्यं व्यज्यते ॥६॥

**चलन्त्यो वारकामिन्यो विलासैर्यत्र कामुकान् ।**
**मोहयन्तीव साकारा माया इव मनोभुवः ॥७॥**

चलन्त्य इति । यत्र अयोध्यायां चलन्त्यो वारकामिन्यः वारकान्ताः साकाराः आकारसहिताः मनोभुवो मन्मथस्य माया इव विलासैः शृङ्गारचेष्टाभिः कामुकान् मोहयन्ति स्म । व्यमोहितवत्यः ॥७॥

**यस्यां सौधशिरःकुम्भाः शातकुम्भमया दधुः ।**
**मग्ना हीरप्रभापूरे ब्रह्माण्डश्रियमम्भसि ॥८॥**

यस्यामिति । यस्यामयोध्यायां शातकुम्भमयाः स्वर्णविकाराः हीर-प्रभापूरे वज्रकान्तिसमूहे मग्नाः सौधानां शिरांसि तेषु कुम्भाः कलशाः ऐश्वर्यमहिमप्रकटनार्थं निहिता इत्यर्थः । अम्भसि जले वर्तमानं यद्ब्रह्माण्डं तस्य श्रियं दधुः । तद्वद्बभुरित्यर्थः । ब्रह्माण्डभाण्डस्य जलान्तरावस्थानम् 'अप एव ससर्जादौ' इत्यादिपुराणवचनैर्बोध्यम् । निदर्शनालङ्कारः ।।८।।

परिखालक्षितो यस्याः प्रतिबिम्बो महावृतेः ।
अभूत् पातालनगरी प्राकाराकारशङ्कितः ।।९।।

[परिखेति ।] यस्या अयोध्याया महावृतेः महाप्राकारस्य प्रतिबिम्बपरे [1]नगरसंरक्षणार्थमभितो निर्मितजलखाते लक्षितः सन् पातालनगरी भोगवती तस्याकार इति शङ्कितोऽभूत् ।।९।।

प्रासादशिखरालोलपताकातर्जनीमिषात् ।
अतर्जयन् दिवो लक्ष्मीं यस्या मन्दिरसम्पदः ।।१०।।

प्रासादेति । यस्यामयोध्यायां मन्दिरसम्पदः गृहलक्ष्म्यः कर्त्र्यः प्रासादानां शिखराणि तेषु आलोलाश्चञ्चलाः पताका एव तर्जन्यः । आलोलाश्च ताः पताकाः तर्जन्यश्च तासां मिषात् व्याजात् दिवः स्वर्गस्य लक्ष्मीं शोभामतर्जयन् त्वं नास्माकं सदृशीति तर्जितवत्य इवेत्यर्थः । अपह्नवालङ्कारः ।।१०।।

संरक्षितायां यत्रासन् रघुराजभुजाबलैः ।
दुर्गरक्षाविधानानि मण्डनायैव केवलम् ।।११।।

संरक्षितायामिति । रघुराजानां हरिश्चन्द्रादीनां भुजाबलैः भुजपराक्रमैः रक्षितायां पालितायां यत्रायोध्यायां दुर्गस्य रक्षा दुर्गरक्षा सा विधीयते एभिरिति दुर्गरक्षाविधानानि लोहयन्त्रादीनि केवलं मण्डनायैव अलङ्कारायै-वासन् । अत्र रघुराजभुजपराक्रमस्य सहायान्तरानपेक्षत्वं व्यज्यते ।।११।।

---

१—धूपानगर, 'क'

बभूव सा पुरी साधु भूभुजा रञ्जिताजिना ।
लक्ष्यमाणनटत्केतुभूभुजा रञ्जिताजिना ॥१२॥

*आजिना लक्ष्यमाणनटत्केतुभूभुजा । अरम् । जिताजिना ।*

बभूवेति । [भुवं[1] भुनक्तीति भूभुक्] भूपः । भुजाः बाहवः । केतव एव [भुवो बाहवः यदि वा] भूभुजाः । नटन्तश्च ते केतुभूभुजाश्च लक्ष्यमाणाः दृश्यमानाः नटत्केतुभूभुजाः यस्यां सा तथोक्ता सा पुरी अयोध्या । जिता आजिर्युद्धं येन सः । जिताजिरनेन अजस्यापत्यं पुमानाजिः । 'अत इनि ठनाविति'[2] इनि प्रत्ययः, तेन भूभुजा भूपालेन दशरथेनेत्यर्थः । अरम् अलं रलयोरभेदः । साधु यथा तथा रञ्जिता पालिता बभूव । अत्र श्लोके केतूनां नटद्भूभुजत्वरूपेण, [3]भूमिरात्मनो दशरथसमो वल्लभो नास्तीति सन्तोषेण सहस्ताभिनयं नटतीवेति ध्वन्यते इत्यलङ्कारेणालङ्कारध्वनिः ॥१२॥

नाना नादेन दूनाने दीने दीने दिनेदिने ।
दानिना दानिना नोदं ददाने दिननीनिना ॥१३॥

*नाना । नादेन । दूनाने । दीने । दीने । दिनेदिने ।*
*दानिना । दानिना । नोदम् । ददाने । दिननीनिना ॥*

नानेति । दिनेदिने प्रतिदिनं नाना [नादेन बहुविधक्रोशनेन] दूनाने दूनस्तप्तः 'अनः माणो यस्य' स तथोक्तः तस्मिन् । दीने दीने कृपणे कृपणे प्रतिकृपणमित्यर्थः । दानिना दानवता सकलार्थिने वाञ्छितार्थं ददा[ने]-नेत्यर्थः । विवक्षातः कारकाणि भवन्तीति न्यायेन न चतुर्थी । नोदं तापं ददाने शत्रावित्यर्थः । दानिना खण्डनवता शत्रुसंहर्त्रा इत्यर्थः । दोऽवखण्डन इत्यस्माल्युडन्तादिनिप्रत्ययः । दिननीनिना दिनं नयतीति दिननीः दिननाथः सूर्य इत्यर्थः । तेन इनिना [स्वाभिमता] सूर्यकुलोत्पन्नेनेत्यर्थः । तादृशेन आजिना रञ्जिता बभूवेति पूर्वेणान्वयः । द्व्यक्षरी ॥१३॥

---

१—भुवः, 'क'

२—अष्टाध्यायी, ५।२।११५

३—न भूमि, 'क'

**यत्खड्गः शत्रुकुम्भीन्द्रकुम्भपाटनलीलया ।**
**लग्नमुक्ताफलच्छेदो जातदंष्ट्र इवाबभौ ॥१४॥**

श्लोकद्वयेन दशरथस्य प्रतापं वर्णयति—

**यत्खड्गेत्यादिने[ति]** यस्य दशरथस्य खड्गः यत्खड्गः शत्रूणां कुम्भीन्द्रा गजेन्द्रास्तेषां कुम्भयोः पाटनं विदारणं तदेव लीलया हेतुना लग्नाः मुक्ताफलच्छेदाः गजकुम्भस्थमौक्तिकशकलानि यस्य स तथोक्तः सन् जातदंष्ट्रः उत्पन्नदंष्ट्राङ्कुर इव आबभौ रराज । भातेर्लिट् । अत्र खड्गधारालग्नमौक्तिकशकलानां दंष्ट्रात्मनोत्प्रेक्षणात् उत्प्रेक्षालङ्कारः ॥१४॥

**दुःसहेन रविर्यस्य प्रतापतपनोष्मणा ।**
**प्रतप्तः पश्चिमाम्भोधौ नूनमद्यापि मज्जति ॥१५॥**

दुःसहेनेति । यस्य दशरथस्य दुःसहेन दुःखेन सोढुं शक्येन प्रतापतपन एव तपनः तस्य ऊष्मणा उष्णेन प्रतप्तः प्रतापितः सन् अद्यापि इदानीमपि पश्चिमाम्भोधौ पश्चिमसमुद्रे मज्जति मग्नो भवति नूनम् । अनेन दशरथप्रतापसूर्यस्य प्रसिद्धसूर्यादपि अतिशयो व्यज्यते । कूटस्थस्य स्ववंश्यात्तिरस्कारो भूषणमेव न तु दूषणमिति भावः ॥१५॥

**आचकांक्षे स सन्तानं परलोकप्रसाधनम् ।**
**पूर्वं कलशवाराशेर्मन्थनादिव वासवः ॥१६॥**

**आचकांक्ष इति** । स दशरथः कलशवाराशेः क्षीराब्धेः मन्थनात् लोडनात् पूर्वं वासव इव महेन्द्र इव परलोकस्य स्वर्गस्य साधनम् उत्कृष्टकारणम् अन्यत्र परलोकस्य प्रसाधनम् अलङ्कारभूतं सन्तानमपत्यं कल्पतरुं च, 'सन्तानः कल्पवृक्षश्चे'त्यमरः । आचकांक्षे कांक्षितवान् । श्लेषोद्दीपितोपमालङ्कारः । सन्तानस्य परलोकसाधनत्वे नापुत्रस्य लोकोऽस्तीत्यादिश्रुतिरेव तत्र प्रमाणमिति भावः ॥१६॥

**स शान्ताया नवं कन्तुमागन्तुं पूजयन्मुनिम् ।**
**कुलतन्तुं ततो गन्तुं सप्ततन्तुं प्रचक्रमे ॥१७॥**

रा इति । स दशरथः ततोऽनन्तरम् आगन्तुं आगतं मन्त्रिभिराकारितमित्यर्थः । शान्तायाः रोमपादकनामकराजकन्यायाः नवं कन्तुमभिनवमन्मथकल्पं मुनिमृष्यश्रृङ्गं पूजयन् सन् कुलतन्तुं सन्तानं गन्तुं प्राप्तुं सप्ततन्तुं यागं प्रचक्रमे प्रकान्तवान् । क्रमेः कर्तरि लिट् ।।१७।।

**दददादं दाददादी लीलालोलालिलालिलूः ।**
**नानानेनाःननानेन ययुयायी ययोऽययः ।।१८।।**

*ददत् । आदम् । दाददादी । लीलालोला । [अ] लिलालिलूः ।*
*नानानेनाः । नन । अनेन । ययुयायी । ययः । अययः ।।*

(चतुरक्षरम्)

ननु कोऽयं तन्तुरनेन प्रकान्त इत्याशङ्क्याश्वमेध इत्याह—

**दददिति** । अनेन दशरथेन आदमन्नं ददत् ददानः अन्नसमृद्धिमानित्यर्थः । दाददादी दादं दक्षिणादानं ददाति यच्छतीति दाददादी परिपूर्णदक्षिण इत्यर्थः । लीलालोलालिलालिलूः लीला व्यापारस्तस्यां लोलाः लम्पटाः ते च ते अरयश्च । रलयोरभेदः । लीलालोलारयः । तान् लालयन्ति लीलालोलालिलालिनः शत्रुपक्षपातिन इत्यर्थः । तान् लुनाति छिनत्तीति लीलालोलालिलालिलूः । नानानेनाः नानाविधानि अनेनांसि सुकृतानि यस्मिन् सः नानानेनाः बहुपुण्यसाधक इत्यर्थः । अययः अयः शुभावहो विधिः तं यातीति अययः अनेक शुभसम्पन्न इत्यर्थः । 'आतोऽनुपसर्गे कः'[1] इति क प्रत्ययः एतादृशः ययुयायी अश्वमेध इत्यर्थः । [न] न यय इति । न न प्राप्त इति नाकं तु प्राप्त एवेत्यर्थः । यातेः कर्मणि लिट् । चतुरक्षरी ।।१८।

**प्रापुर्हरिं सुरा रक्षः सभयाखण्डलालसाः ।**
**यथाद्रयोऽङ्घ्रिं यमिनां सभयाखण्डलालसाः ।।१९।।**

*रक्षः सभयाखण्डलालसाः । सभया । खण्डलालसाः ।*

(पादयमकम्)

---

१—अष्टाध्यायी ३।२।३

तदानीमेव देवाः रावणपीडिता विष्णुं प्रार्थयितुमागता इत्याह—

**प्रापुरिति** । रक्षः सभयाखण्डलालसाः रक्षो रावणः तस्मात्सभयः भयेन सहितः स चासावाखण्डलश्च तेनालसाः खिन्नाः । महेन्द्रभयं दृष्ट्वा स्वयमपि खिन्ना इत्यर्थः । सुरा देवा यमिनां ऋषीणां सभयाखण्डलालसाः खण्डाद् वज्रायुधकृतखण्डनात् लालसाः चञ्चलाः अद्रयः पर्वताः अब्धिं यथा समुद्रमिव प्रापुः प्राप्ताः । आपेर्लिट् । उपमालङ्कारः । पादयमकम् ॥१९॥

**उदधेरवधेः श्रीशः सविधे बहुधेरितैः**
**विविधेऽनवधेयात्मा बुबुधे विबुधेडितैः ॥२०॥**

**उदधेरिति** । अनवधेयः अपरिच्छेद्यः आत्मा स्वरूपं यस्य सः अनवधेयात्मा श्रीशः लक्ष्मीकान्तो विष्णुः निद्रायमाणमिति भावः । उदधेः समुद्रस्य अवधेर्मर्यादायाः विविधे नानाविधे सविधे निकटे बहुधा बहुप्रकारेण ईरितैरुक्तैः विबुधानामीडितैः स्तोत्रैर्बुबुधे बुद्धवान् । बुधेः कर्तरि लिट् ॥२०॥

**शशङ्के पुण्डरीकाक्षः फुल्ललोचनमण्डलः ।**
**चन्द्रभानुसुतापूरः पुण्डरीकाभिमण्डितः ॥२१॥**

एकेन श्लोकेन प्रबुद्धं विष्णुं वर्णयति—

**शशङ्के इति** । पुण्डरीकाक्षो विष्णुः फुल्ले प्रबोधविकसिते फुल्लविकसन इत्यस्माद्धातोः पचाद्यच् । लोचनमण्डले यस्य स तथोक्तः सन् पुण्डरीकाभ्यां सिताम्भोजाभ्याम् अभिमण्डितः अलङ्कृतः चन्द्रभानुसुतायाः यमुनायाः पूरः प्रवाहः शशङ्के । यमुनाप्रवाह इति शङ्कित इत्यर्थः । शङ्कतेः कर्मणि लिट् ॥२१॥

**निर्जरार्थनयाथाङ्गी चक्रे दशरथाज्जनिः ।**
**शार्ङ्गिणा श्रितरक्षायै रचयन्ति न किं घनाः ॥२२॥**

(निरोष्ठ्यम्)

निर्जरेति । अथ अनन्तरं शार्ङ्गिणा नारायणेन ण्यासश्रन्थो युजि[1]ति युच्प्रत्ययः । दशरथात् जनिः उत्पत्तिः अङ्गीचक्रे अङ्गीकृता । करोतेः कर्मणि लिट् । ननु भगवता कुत्सितं मनुष्यजन्म किमर्थमङ्गीकृतमित्याशयार्थान्तरन्यासेन परिहरति । तथा हीति । घना महान्तः श्रितरक्षायै आश्रितसंरक्षणाय किं न रचयन्ति । सर्वं कुर्वन्त्येव कुत्सितं कर्मापि कुर्वन्त्येवेति यावत् अर्थान्तरन्यासोऽलङ्कारः । निरोष्ठ्यम् ।।२२।।

पत्नीभ्यः पायसीं पात्रीं भूप सन्ध्यानलोदिताम् ।
ददौ ततश्चकोरीभ्यः चन्द्रिकामिव चन्द्रमाः ।।२३।।

पत्नीभ्य इति । ततः अनन्तरं भूपो दशरथः सन्ध्यावत् अनलः सन्ध्यानलः अत्रानलशब्देन अश्वमेधान्तानुष्ठी[2] [?] यमानपुत्रेष्टिहोमानलो विवक्षितः तस्मादुदिताम् । अन्यत्र अनल इव सन्ध्या सन्ध्यानलः तस्मादुदितां पायसीं पायसमयीं पात्रीं पायसपात्रमित्यर्थः । पत्नीभ्यः कौसल्यादिभ्यः चन्द्रमाः चकोरीभ्यः चन्द्रिकामिव ददौ ।।२३।।

भूपस्वातीघनादिष्टं भागशः पायसामृतम् ।
दयिताः शुक्तयः प्राश्य गर्भान् लोकादृतान् दधुः ।।२४।।

भूप इति । दयिताः कौसल्यादयः कर्त्र्यः भूप एव स्वातीघनः स्वातीमहानक्षत्रोदितमेघः तेन आदिष्टं दत्तं पायसमेवामृतं पायसामृतं भागशः स्वस्वभागप्रकारेण भक्षयित्वा लोकादृतान् गर्भान् दधुः । कौसल्यादिगर्भाणां विष्णुमयत्वे शुक्तिगर्भाणां मौक्तिकमयत्वेन च लोकादृतत्वं बोध्यम् । पायसविभागस्तु श्रीरामायणोक्तरीत्या द्रष्टव्यः ।।२४।।

पुंरत्नं निजगर्भेषु धृत्वा भुवननायकम् ।
भूपतेरभवन् पत्न्यो रत्नगर्भाधिकप्रिया ।।२५।।

---

१—अष्टाध्यायी ३।३।१०७

२—हि, 'क'

**पुंरत्नेति** । पत्न्यः कौसल्यादयः निजगर्भेषु भुवननायकं सकललोकाधिपम् अन्यत्र लोकोत्तरनरं पुंरत्न पुरुषोत्तमं विष्णुं पुरुषरत्नं च । वज्रस्य [वज्रमणेः] पुरुषरत्नत्वमितरेषां नास्ति रत्नत्वञ्च । रत्नपरीक्षकत्वसम्प्रदायमिति बोध्यम् । धृत्वा दशभूपतेर्दशरथस्य रत्नानि गर्भे यस्याः सा रत्नगर्भा भूमिः तत अधिकप्रिया अधिकप्रीत्यास्पदा अभवन् आसन् । भातेर्लङ् । कौसेल्यादिषु लोकोत्तरनायकपुरुषरत्नगर्भत्वेन रत्नगर्भातोऽपि भूपतेरधिकप्रीतिर्जायते इति भावः ॥२५॥

**भक्षयन्तिस्म तास्तिस्रः सार्वभौमस्य वल्लभाः ।**
**गर्भिण्यश्चिरसापत्न्यबद्धद्वेषा इवावनीम् ॥२६॥**

अथ द्वाभ्यां श्लोकाभ्यां कौसल्यादीनां गर्भचिह्नानि वर्णयति—

**भक्षयन्तीत्यादिना** । गर्भिण्यः प्रशस्तगर्भसम्पन्नाः सर्वभूमेरधिपतिः सार्वभौमो दशरथः । अनुशतिकादित्वादुभयपदवृद्धिः । तस्य वल्लभाः प्रियाः तास्तिस्त्रः कौसल्यादयः चिरं सापत्न्येन बद्धद्वेषा इव बद्धेर्ष्या इव अवनीं भूमिं भक्षयन्ति स्म अत्र गर्भिणीनां स्वाभाविकमृद्भक्षणस्य सापत्न्यद्वेषहेतुकत्वेनोत्प्रेक्षणादुत्प्रेक्षालङ्कारः ॥२६॥

**विश्वम्भरं वहन्त्यस्ताः गर्भेषु पुरुषोत्तमम् ।**
**तद्भारातिशयेनेव बभूवुः कृशविग्रहाः ॥२७॥**

**विश्वम्भरमिति** । ताः कौसल्यादयः गर्भेषु विश्वम्भरं विश्वं विभ्रतं हेतुगर्भविशेषणं पुरुषोत्तमं वहन्त्यः सत्यः तद्भारातिशयेनेव विश्वम्भरणजनितभाराधिक्येनेव कृशविग्रहाः कृशशरीराः बभूवुः । भवतेर्लिट् । अत्रापि पूर्वोक्त एवालङ्कारः ॥२७॥

**काले सुषुविरे तिस्रः परतापहरान् सुतान् ।**
**अर्कस्येव पयोबिन्दून् पक्वगर्भामरीचयः ॥२८॥**

**काले इति** । तिस्रः कौसल्यादयः पक्वगर्भाः सत्यः काले द्वादशमासे चैत्रे नावमिके तिथावित्यादिश्रीरामायणवचनात् । न च दशमे मासि सुषुव इति श्रुति विरोधः । तस्याः पुरुषमात्रप्रसवविषयत्वेन उत्तमपुरुषप्रसवविषय-

त्वाभावात् । न च दशमे मासि कौशल्या सुषुवे पुत्रमद्वयमित्यध्यात्मरामायण-वचनविरोधः । तस्य गर्भाभिव्यक्त्यनन्तरं दशमासेत्यत्र तात्पर्यादित्यलं विस्तरेण । सर्वतापहरान् रामादीनां लोककण्टकरावणादिसंहारार्थमुदयादिति भावः । सुतान् पुत्रान् अर्कस्य मरीचयः पक्वगर्भाः सत्यः सर्वतापहरान् पयो-बिन्दूनिव सुषुविरे प्रसूतवत्यः । सूतेः कर्तरि लिट् । घर्मान्तपयोबिन्दूनामति-शैत्यात्तापहरत्वमिति भावः । सूर्यकिरणानां वर्षकत्वं सकलपुराणकविवचन-सिद्धमिति बोध्यम् । तथा च कालिदासः 'गर्भं दधत्यर्कमरीचयोस्मादि'ति । उपमालङ्कारः ।।२८।।

**कौसल्यातनयं रामं भरतं कैकयीसुतम् ।**
**राजा लक्ष्मणशत्रुघ्नौ सौमित्रेयौ व्यवाहरत् ।।२९।।**

अथ जातसूतकानन्तरं पुत्राणां व्यवहारनामानि राजा कृतवानित्याह—

कौसल्येति । राजा दशरथः कौसल्यातनयं रामानामानं कैकयीसुतं भरतनामानं सौमित्रेयौ सुमित्रातनयौ 'स्त्रीभ्योढगि[1]'ति ढक्प्रत्ययः । लक्ष्मण-शत्रुघ्ननामानौ व्युदाहरत् व्यवहृतवान् । हरतेर्लङ्[2] ।।२९।।

**अयोध्यायामभूद्रामो रघुवंशे यदा तदा ।**
**लङ्कायां राक्षसस्त्रीणां विरामो भाग्यसम्पदाम् ।।३०।।**

रामावतारकाल एव अयोध्यायामनर्थः संसूचित इत्याह—

**अयोध्यायामिति** । रामः अयोध्यायां रघुवंशे यदाभूत् अवतीर्णवान् तदाकालं लङ्कायां राक्षसस्त्रीणां भाग्यसम्पदां सौभाग्यवैभवानां विरामः अवसानमभूत् । दौर्भाग्यसूचकं दुर्निमित्तमभूदित्यर्थः । वाक्यार्थहेतुकं काव्य-लिङ्गालङ्कारः ।।३०।।

---

१—स्त्रीभ्यो ढक् ४।१।१२०
२. अष्टाध्यायी ३।२।२९

**रामादयः कुमारास्ते स्वस्वधात्रीस्तनन्धयाः ।**
**आनन्देन गुरोः साकमभिवृद्धिं समाययुः ॥३१॥**

**रामादय इति ।** ते रामादयः कुमाराः स्वस्वधात्रीणां स्वस्वोपमातॄणां स्तनन्धयाः स्तन्यपायिनः सन्तः । नासिकास्तनयोर्ध्माधेटोर्[२] रिति खश्प्रत्ययः । अरुद्विषदित्यादिना मुमागमः । गुरोः पितुः आनन्देन साकं सन्तोषेण सह अभिवृद्धिं उपचयं समाययुः प्राप्तवन्तः । सहालङ्कारः । लक्षणं विस्तरभयान्न लिख्यते ॥३१॥

**मारामरोऽमरामीरो रामारामो रमारमः ।**
**मुरमारोऽरिरैरोऽरं रामो रेमेऽरिरीरुरुः ॥३२॥**

*मारामरः । अमरामीरः । रामारामः । रमारमः ।*
*मुरमारः । अरिरैरः । अरं रामः । रेमे । अरिरीः ।उरुः॥*

तत्र राममेकेन श्लोकेन वर्णयति—

**मारेति ।** मारामरः मारवत् मन्मथवत् अमलः सुन्दरः रलयोरभेदः । अमरामीरः । न मींलयतीत्यमीलः विकास इत्यर्थः । अमराणाममीरः रामारामः रामाणां क्रीडानामारामः स्थानम् आत्माराम इत्यर्थः । रमारमः लक्ष्मीरमणः मुरमारः मुरोनाम कश्चिदसुरः तं मारयतीति मुरमारः । अरिरैरः अरीणां शत्रुणां रायं धनं राति आददातीति अरिरैरः । 'आतोऽनुपसर्गेकः'[१] इतिकप्रत्ययः । अरीरेः अरमस्यास्तीत्यरी चक्रम् । तत् रीणाति प्रक्षिपती[२]त्यरिरिः चक्रधर इत्यर्थः । गुरुः सर्वगुणाधिकः रामः अरं रेमे, खुरलीविहारादिबाल्योचितक्रीडां कृतवानित्यर्थः । द्व्यक्षरी ॥३२॥

---

१. अष्टाध्यायी ३।२।३

२. रातीत्यरीरिः ।

अधीते स्मानुजैस्साकमुपनीतो रघूत्तमः ।
साङ्गामाचार्यविश्वासी निजनिःश्वासभारतीम् ॥३३॥

अधीत इति । रघुषु उत्तमः रघूत्तमः रामः यद्वा रघूणामुत्तम इति पञ्चमीतत्पुरुषो वा । उपनीतः सन् उपनयनं कृतः सन् अनुजैः साकमुपनीतैरिति भावः आचार्यविश्वासी सन् साङ्गां व्याकरणादिसहितां निजनिःश्वासभारतीं स्वीयश्वसितायमानसरस्वतीं वेदानित्यर्थः । वेदानां परमात्मनिःश्वासरूपत्वम् । तस्य महतोभूतस्य निःश्वसितमित्यादिश्रुतिसिद्धं बोध्यम् । अधीते स्म अधीतवान् । भूते लट् ॥३३॥

स गुरोराज्ञयां कर्तुं विश्वामित्रमहं तया ।
अन्वगात् सानुजो हन्तुं विश्वामित्रमहन्तया ॥३४॥

*विश्वमित्रमहम् । तया । विश्वामित्रम् । अहन्तया ।*

अथ रामः विश्वामित्रप्रार्थितस्य पितुराज्ञया विश्वामित्रमनुसृतवान् इत्याह—स इति । सः रामः सानुजः सन् गुरोः पितुः आज्ञया विश्वामित्रमहं कौशिकोत्सवं कर्तुं यागसंरक्षणेनेति भावः । तया प्रसिद्ध्या अहन्तया अहङ्कारेण विश्वश्चासावमित्रश्च विश्वामित्रः तम् । जातावेकवचनम् । सर्वशत्रूनित्यर्थः हन्तुमन्वगात् अनुसृतवान् तमिति शेषः । इणो गालुङीति गादेशः । पादयमकम् ॥३४॥

बलाबलाबलालम्बौ बलौ बिलबिलाविलाम् ।
वनिं नवावनीनीवीं वनीवननवाविनौ ॥३५॥

बलेति । वनीवननवाविनौ वनीवननं यागभिक्षां वाति प्राप्नोतीति वनीवननवः यागसंरक्षणार्थमागतः कौशिक इत्यर्थः । वनीवननं यागभिक्षेति मीमांसकवचनात् । तम् अवितुं रक्षितुं शीलमनयोरस्तीति वनीवननवाविनौ रामलक्ष्मणौ । बलाबलाबलालम्बौ बलानाम क्षुत्पिपासाद्युपशमनार्थं कौशिकोपदिष्टा विद्या । अतिबलाया अप्युपलक्षणमिदम् । सैवाबला स्त्री मातेति यावत् । तस्याः बलं सामर्थ्यमेव आलम्बौ ययोस्तौ तथोक्तौ सन्तौ । बिलिबिलाविलां बिलिनः पर्वताः तेषां बिलानि गुहाः तैः आविलां भयङ्करामित्यर्थः ।

बवयोरभेदन्यायेन वकारोच्चारणम् । नवावनीर्नावीम् अवनेर्भूमेर्नीविः न वा च सा अवनीनीविश्च नवावनीनीवी, तां नीवीकल्पामित्यर्थः । [वनिं अरण्यं प्रति[1]] बलौ बगौ चलितवन्तावित्यर्थः । वल सञ्चलन इति धातोः पचाद्यच् । चतुरक्षरी ।।३५।।

काकिकाकाककङ्काङ्कां काकुकेकिककेककाम् ।
काकुकैकाकिकोकौकः कौ कौ किंकैककाककाम् ।।३६।।

*काकिकाः[2] काककङ्काङ्काम् । काकुकेकिककेककाम् ।*
*काकुकैकाकिकोकौकः । कौ । कौ । किं कैककाककाम् ।।*

(एकाक्षरी)

एकेन श्लोकेन अटवीमेव वर्णयति—

काकिकेति । काकिकाकाककङ्काङ्काम् । काकिकाः काक्यः काकाः पुंव्यक्तयः कङ्काः पक्षिविशेषाः त एव अङ्काः चिह्नानि यस्याः सा तथोक्ता ताम् । काकुकेकिककेककाम् । केकिनां मयूराणां स्वार्थे कन् प्रत्ययः । केककाः केकारवाः, काकवः विस्वराः । ताटकायाः दुर्निमित्तसूचनार्थमिति भावः । केकिककेकका यस्याः सा काकुकेकिककेकका ताम् । 'केकाशब्दादुदीचामातस्थाने यकपूर्वायाः[3], इति विकल्पाश्रयणादिडभावः । काकुकैकाकिकोकौकः के जले अकु अकुत्सितं कायन्ति ध्वनन्ति काकुकाः । कैशब्द इत्यस्माद्धातोः क्विप्प्रत्ययः । एकाकिनः सायंकालादौ स्त्रीव्यक्तिरहिताः ते च ते कोकाश्च, ते एकाकिकोकाश्च काकुकैकाकिकोकाः तेषामोकः स्थानं चक्रवाकनिवासभूतमित्यर्थः । कौ कौ भूमौ भूमौ प्रतिदिशमित्यर्थः । किं कैककाककाम् किं कुत्सितः प्रचण्ड इति यावत् । स चासौ कश्च वायुश्च किं कः । किं शब्दः कुत्सितपरः तेन एककं मुख्यं अकं दुःखं यस्यां सा किंकैककाककाम् । प्रचण्डवायुजनितप्राणिदुःखामित्यर्थः । तादृशीं वनीं प्रतिबलाविति । पूर्वेणान्वयः ।। एकाक्षरी ।।३६।।

---

१—वनी अरण्यानां प्रति ।

२—काकीः काका । ककङ्काङ्काम्, । 'क'

३—अष्टाध्यायी ७।३।४६

**राघवोटङ्किता तत्र शशङ्के चापटङ्कृतिः ।**
**रक्षो वधागमारम्भः स्फुरदोङ्कारवैखरी ॥३७॥**

तत्र वने राघवेण रामेण उट्टङ्किता उद्भासिता चापटङ्कृतिः धनोः ज्या-आस्फालन शब्दः रक्षो वधागमारम्भः रक्षसां भाविवधस्य प्रारम्भः। स्फुरत् ध्वनत् ओंकार वैखरी ओमिति शब्दोच्चारः तत् शशङ्के । रूपकानुप्राणितोत्प्रेक्षालङ्कारः ॥३७॥

**तामाकर्ण्याटवीवाट्यां ताटका तोटकोद्धुता ।**
**रटन्ती विकटाटोपं टिटीके निकटं तयोः ॥३८॥**

तामिति । चापटङ्कृतिम् आकर्ण्य श्रुत्वा अटवीवाट्यां अटवीमार्गे ताटका तोटकेन रोषसंभ्रमवचनेन उद्धता सती 'रोषसंभ्रमवचनं तोटकमि'त्यलङ्कारिकाः । विकट आटोपो यस्मिन् कर्मणि । रटन्ती ध्वनन्ती सती तयोः रामलक्ष्मणयोः निकटं टिटीके प्राप्तवती । टीकतेः कर्तरि लिट् । वृत्यनुप्रासः शब्दालङ्कारः ॥३८॥

**लालोना गगनालोला धूरिता ननतारिधूः ।**
**स्राविकाननकाविस्रा दारिताननतारिदाः ॥३९॥**

*लालोना । गगनालोला । धूरिता ननतारिधूः ।*
*स्राविकाननकाविस्रा दारिताननतारिदा ॥*

**(अर्धपादप्रतिलोमम्)**

द्वाभ्यां श्लोकाभ्यां ताटकां वर्णयति—

लालेत्यादिना । लालोना लालया जिह्वाजलेन ऊना रहिता रामभयादनार्द्रजिह्वेत्यर्थः । गगनालोला आकाशे चञ्चला धूरिता धुरं भारं श्रिता प्राप्ता सकललोकभारायमाणेत्यर्थः । ननतारिधूः ननताः प्रणताः अवशगाः शत्रव इति यावत्, तेषामालिः समूहः रलयोरभेदः तां धुनोति कम्पयतीति ननतालिधूः शत्रुमण्डलकम्पिनीत्यर्थः । स्रावः अस्यास्तीति स्राविकं लालादिजलयुक्तमित्यर्थः । आननमेव आननकः । स्वार्थे कः । स्रावि च तत् आननकम्

च तस्मिन्, आविस्रा समन्तादामगन्धिः। 'विस्रं स्यादामगन्धियदित्यमरः। दारितं व्यात्तम् आननं मुखं यया सा दारितानना तस्या भावः दारिताननता तया अरीन् शत्रून् द्यति खण्डयतीति सा तथोक्ता। मुखव्यादानमात्रेण शत्रुसंहारिणीत्यर्थः। अर्धपादप्रतिलोमम् ॥३९॥

**साहसानलसामग्री महसापरसामरा।**
**रामसारविसामर्थ्या तामसानलसामता ॥४०॥**

*साहसानलसामग्री। महसा। अपरसामरा।*
*रामसारविसामर्थ्या। तामसानलसा। अमता॥*

(मुरजबन्धः)

**साहसेति।** साहसमेव अनलः अग्निः तस्य सामग्री पुष्कलकारणसम्पत्तिरूपा महसा तेजसा प्रतापेन हेतुना अपरसामरा अपगतः रसः उत्साहः येषां ते अपरसाः अमराः देवा यस्याः सा तथोक्ता रामसारो रामबलं तेन विगतं सामर्थ्यं यस्याः सा तथोक्ता, तामसेषु तमोगुणयुक्तेषु राक्षसेषु अनलसा प्रबला अमता सकललोकविमता एतादृशी ताटका तयोर्निकटं टिटीक इति पूर्वेणान्वयः। मुरजबन्धः। बन्धोद्धारप्रकारस्तु पञ्चतिर्यग्रेखा लिखित्वा चतसृषु तिर्यग्वीथिषु क्रमेण पादचतुष्टयं लिखेत्। तत्र प्रथमवीथिप्रथमाक्षर-द्वितीयवीथिद्वितीयाक्षर-तृतीयवीथितृतीयाक्षर-चतुर्थवीथिचतुर्थपञ्चमाक्षर-तृतीयवीथिषष्ठाक्षर-द्वितीयवीथिसप्तमाक्षर-प्रथमवीथ्यष्टमाक्षराणां क्रमेण-पाठे सति प्रथमपादो भवति। चतुर्थवीथ्याम् अन्त्यपादप्रथमाक्षर-तृतीयवीथिद्वितीयाक्षर- द्वितीयवीथितृतीयाक्षर-प्रथमवीथिचतुर्थपञ्चमाक्षर-द्वितीयवीथिषष्ठाक्षर-तृतीयवीथिसप्तमाक्षर-तृतीयचतुथवीथ्यष्टमाक्षराणां क्रमेण पाठे अन्त्यपादो भवति मुरजाकारश्च भवति। शिष्टं पादद्वयं मुरजमुखयोः पततीति मुरजबन्धसंक्षेपः ॥४०॥

**रामसायकवातस्य घातेन शिथिलीकृता।**
**सा पपाताम्बरे लोला रक्षोवंशपताकिका ॥४१॥**

**रामेति।** अम्बरे आकाशे लोला अन्यत्र वस्त्रे चञ्चला रक्षोवंशपताकिका राक्षसवंशश्रेष्ठा सा ताटका वेणुदण्डबद्धपताका च गम्यते। राम-

सायको रामबाणः तस्य वातः वायुः तस्य घातेन अभिघातेन शिथिलीकृता सती निपपात पतितवती। अत्र वेणुदण्डबद्धपताकापातो व्यज्यते इति शब्दशक्तिमूलध्वनिः ॥४१॥

**पुष्पवृष्टिः पपातास्मिन् नवा मन्दारवालिनी।**
**संजगौ किं यशस्तस्य न वामन्दारवालिनी ॥४२॥**

*नवा मन्दारवालिनी। न। वा। अमन्दारवा। अलिनी।*

**पुष्पवृष्टिरिति।** नवा नूतना मन्दरात् कल्पतरोः वलने चलतीति मन्दारवालिनी पुष्पवृष्टिः अस्मिन् रामे पपात पतितवती तदा अलिनी भृङ्गी अमन्दारवा अधिकरुता सती तस्य रामस्य यशः न संजगौ वा किम्। संजगाविवेत्यर्थः। अत्र काकुरनुसन्धेया वा शब्दोऽत्र इवार्थे वर्तते। उत्प्रेक्षालङ्कारः ॥४२॥

**द्युतिं वह्निरिव प्रातर्मुनिर्मन्देहवैरिणे।**
**सोदयायाथ रामाय विततारास्त्रसम्पदम् ॥४३॥**

**द्युतिमिति।** अथ ताटकावधानन्तरं मुनिर्विश्वामित्रः सोदयाय साभ्युदयाय रामाय अस्त्रसम्पदं जृम्भकादिमहास्त्रसमृद्धिं प्रातः उषसि वह्निः मन्देहवैरिणे मन्देहानाम केचन् राक्षसाः तेषां वैरी सूर्यः तस्मै द्युतिमिव वितताार वितीर्णवान्। अग्नेः सायंकाले सूर्यतेजोग्रहणं पुनः प्रातःकाले तत्प्रत्यर्पणं च। 'अग्नि वावादित्यः सायं प्रविशति' इत्यादि श्रुतिसिद्धमिति भावः। उपमालङ्कारः ॥४३॥

**रामपादाम्बुजन्यासैः ततो भुवनपावनैः।**
**अपि निन्ये महौन्नत्यं तत्क्षणे वामनाश्रमः ॥४४॥**

**रामेति।** ततः अनन्तरं भुवनपावनैः रामपादाम्बुजन्यासैः रामपादारविन्दप्रक्षेपैः तत्क्षणे प्रक्षेपकाल एव वामनाश्रमोऽपि महौन्नत्यमत्युन्नतत्वं

निन्ये नीतः अत्र वामनाश्रमे ह्रस्वाश्रमः रामपादन्यासैः औन्नत्यं नीत इति शब्दतो विरोधः वामनस्य वामनावतारस्य हरेराश्रमः तैरेवौन्नत्यं प्रसिद्धिं निन्य इत्यर्थतः परिहारः इति विरोधाभासोऽलङ्कारः ॥४४॥

**आश्रमं प्राप्य गाधेयस्ततोऽभूत् मखदीक्षितः ।**
**अश्रमं राघवावेत्य रक्षःसंहारदीक्षितौ ॥४५॥**

**आश्रम** इति । ततः अनन्तरं गाधेयो विश्वामित्रः आश्रमं सिद्धाश्रमं प्राप्य मखे दीक्षितः अभूत् । राघवौ रामलक्ष्मणौ अश्रमं श्रमाभावं चैत्य रक्षसां राक्षसानां संहारे दीक्षितौ बद्धकक्ष्यौ अभूतामिति शेषः ॥४५॥

**ताभ्यां मण्डलितौ चण्डौ चापदण्डौ हिरण्मयौ ।**
**चक्राते प्राप्तवीरश्रीहेमताटङ्कविभ्रमम् ॥४६॥**

**ताभ्यामिति** । ताभ्यां रामलक्ष्मणाभ्यां मण्डलितौ मण्डलीकृतौ चण्डौ भयङ्करौ हिरण्मयौ सुवर्णविकारौ चापदण्डौ कोदण्डयष्टी, प्राप्ता आसन्ना सा च सा वीरश्रीश्च तस्याः हेमताटङ्कविभ्रमं सुवर्णकर्णावतंसविशेषविलासं चक्राते कृतवन्तौ । करोतेर्लिट् । निदर्शनालङ्कारः ॥४६॥

**निर्जराखेटके दक्षास्ताटकेयादयस्तदा ।**
**साक्षान्मुनेः सप्ततन्तोरन्तराया इवागमन् ॥४७॥**

**[निर्जरेति ।]** तदा तस्मिन् काले निर्जराणामाखेटे मृगयायां संहार इति यावत् दक्षा कुशलाः ताटकेयादयः मारीचादयः मुनेर्विश्वामित्रस्य सप्ततन्तोः क्रतोः साक्षादन्तरायाः प्रत्यक्षविघ्ना इवागमन् । आगतादमेर्लुङ् ॥४७॥

**तन्मुक्तरक्तवर्षेण यागभूमिर्न केवलम् ।**
**कषायितापि रामस्य दृष्टिस्तत्कर्मगोचरा ॥४८॥**

**तन्मुक्तेति** । तैर्मारीचादिभिर्मुक्तं च तद्रक्तवर्षं च तेन तन्मुक्तरक्तवर्षेण यागभूमिरेव केवलं न कषायिता न रक्तीकृता किन्तु तत्कर्मगोचरा

तेषां मारीचादीनां कर्म रक्तवर्षादिचेष्टा सैव गोचरादिविषयो यस्याः सा तथोक्ता रामस्य दृष्टिरपि कषायिता अभूदिति शेषः। तेषां दुश्चेष्टां दृष्ट्वा रामस्य नयनमपि रक्तमभूदित्यर्थः ॥४८॥

**तन्मण्डलितकोदण्डचण्डमार्तण्डमण्डलात् ।**
**मन्देहानामतिक्रूरा निर्ययुर्बाणभानवः ॥४९॥**

तदिति। तेन रामेण मण्डलितं कुण्डलितं तच्च तत्कोदण्डं च तदेव चण्डमार्तण्डमण्डलं घर्मकालोदितसूर्यमण्डलं, तस्मात् मन्देहानां मतिहीनानां मारीचादीनाम् अन्यत्र मन्देहानामकराक्षसानामतिक्रूराः अतिभयङ्कराः बाणा एव भानवः किरणाः निर्ययुः निर्याताः। यातेर्लिट्। परम्परितरूपकालङ्कारः॥

**रामजीमूतपोतेन शरवृष्टिर्निरन्तरा ।**
**मुमुचे खेचरेन्द्राणामूर्ध्वमद्भुतदायिनी ॥५०॥**

रामेति। राम एव जीमूतपोतः नीलमेघार्भकः तेन कर्त्रा निरन्तरा नीरन्ध्रा खेचरेन्द्राणां देवानाम् अद्भुतदायिनी आश्चर्यकारिणी शरवृष्टि-र्बाणवृष्टिर्जलवृष्टिश्च ऊर्ध्वं यथा तथा मुमुचे मुक्ता। मुचेः कर्मणि लिट्। मेघकृतोर्ध्ववर्षस्य कदाचिदप्यननुभवा देवानामप्याश्चर्यमभूदिति भावः ॥५०॥

**मरुतामखिलारिघ्नगुरुतादभ्रतारिका ।**
**कारिताभ्रलताशङ्का सारिता मखिताशया ॥५१॥**

**(मुरजबन्धः)**

एकेन श्लोकेन रामशरवृष्टिं वर्णयति—

**मरुतामिति**। मरुतां देवानां ये अखिला अरयः शत्रवः राक्षसाः इत्यर्थः तान् हन्तीत्यखिलारिघ्ना तादृशी गुरुता गौरवं यस्याः सा तथोक्ता, 'गौरवे मेरुमन्दरादिति रामायणवचनाद्रामशरवृष्टेरतिगौरवमिति भावः। अदभ्रतारिका अदभ्रमधिकं यथा तथा तरति गच्छतीत्यदभ्रतारिका वेगाद्दूरगामिनी-

त्यर्थः कारिता अभ्रसम्पादिता अभ्रलतानां गगनसञ्जातलतानां शङ्का यया सा तथोक्ता, मखिताशया मखितायाः यागवत्तायाः आशया इच्छया सारिता प्रवर्तिता, विश्वामित्रो मखीभूयादिति वाञ्छया रामेण प्रसारितेत्यर्थः। एतादृशी शरवृष्टिर्मुमुच इति पूर्वेणान्वयः। मुरजबन्धोऽयम्। बन्धोद्धारप्रकार-स्तु प्रागेवो [क्तम्[1]] इति द्रष्टव्यम् ।।५१।।

**सायके ताटकारातेः सुबाहुरवसायके ।**
**सायकेऽस्याहुतिरभूत् [?][2] वह्न्याभे रंहसायके ।।५२।।**

(आद्यन्तयमकम् ।)

तत्रैकेन वाणेन सुबाहुर्हत इत्याह—

**सायके [इति]।** अयेन शुभावहतिथि [?][3] ना सहेति सायके, अवसायके शत्रूणामवसानकारिणि, वह्न्याभेऽग्निसदृशि, अस्य रामस्य, सायके आहुतिः प्रथमाहुतिरभूत् रामशराग्निना दग्धोऽभूदित्यर्थः। [किं भूते सायके रंहसा वेगेन अयके गमनशालिनि इत्यर्थः।] आद्यन्तयमकम् ।।५२।।

**मारीचो नीचगीस्तस्य नाराचश्वासवायुना ।**
**दूरीचक्रेऽब्धिपातेन सारी चलत्तृणं यथा ।।५३।।**

**मारीच इति ।** सारी बलवान् नीचगीः निर्वचनः मारीचः तस्य रामस्य नाराचश्वासवायुना बाणश्वासमनेन अस्त्रेण[4] [?] वायव्यास्त्रेणेत्यर्थः। अब्धि-पातेन हेतुना चलत्तृणः यथा चलिततृणमिव दूरीचक्रे दूरीकृतः ।।५३।।

**अन्यानभिसमुत्पेतुः सान्द्रा रामशिलीमुखाः ।**
**मन्दारकैरधः पेतुरिन्द्रारामशिलीमुखाः ।।५४।।**

**अन्यानिति ।** सान्द्राः निविडाः रामशिलीमुखाः रामबाणाः अन्यान् इतरान् राक्षसान् प्रति समुत्पेतुः समुत्पतिताः। तदानीमेव इन्द्रारामस्य

---

१—वोत्तरम्, 'क'
२—हुतिरमा, 'क'
३—दितिना, 'क'
४—कर्त्रेण, 'क'

नन्दनवनस्य सम्बन्धिनः शिलीमुखाः भृङ्गाः मन्दारकैः कल्पतरुकुसुमैः सह अधः अधस्तात् पेतुः पतिताः। राक्षससंहारसमये पुष्पवृष्टिरपीह पपातेति भावः। उभयत्रापि पतेर्लिट् ॥५४॥

**गाधेयोऽवभृथस्नानं वितेने विमलोदकैः।**
**मखान्ते मखशत्रूणां शोणितैः काननद्रुमाः ॥५५॥**

**गाधेय इति**। गाधेयो विश्वामित्रः मखान्ते यज्ञान्ते विमलोदकैः अवभृथस्नानं वितेने कृतवान्। तनोतेर्लिट्। काननद्रुमाः आश्रमवनद्रुमाः मखशत्रूणां राक्षसानां शोणितैः रक्तैः अवभृथस्नानं वितेनुरिति वचनव्यत्ययेनान्वयः। राक्षसवधात् तत्रस्थवृक्षाणामपि सन्तोषो जात इति भावः ॥५५॥

**रामोऽथ मुनिना निन्ये मिथिलां शिथिलापदा।**
**सीतया दृढसापत्न्यं कर्तुं तद्विजयश्रियः ॥५६॥**

**राम इति**। अथ यज्ञानन्तरं शिथिलापदा अपगतयज्ञविघ्नरूपविपत्तिना मुनिना विश्वामित्रेण कर्त्रा रामः सलक्ष्मण इति भावः। विजयश्रियः रामविजयलक्ष्म्याः सीतया दृढसापत्न्यं कर्तुं मिथिलां जनकनगरीं निन्ये नीतः विजयलक्ष्मीप्राप्त्यनन्तरम् विश्वामित्रेण सीताविवाहार्थं रामोऽपि प्रतिनीत इत्यर्थः ॥५६॥

**हरिपादारविन्दाग्रमरन्दस्यन्दनिम्नगा।**
**अतारि रघुपुत्राभ्यामध्वजश्रमनाशिनी ॥५७॥**

**हरीति**। रघुपुत्राभ्यां रामलक्ष्मणाभ्यां कर्तृभ्याम् अध्वजश्रमनाशिनी मार्गजन्यखेदहारिणी हरेः विष्णोः पादारविन्दाग्रस्य पादपद्माञ्चलस्य मकरन्दस्यन्दः मकरन्दस्रावरूपा निम्नगा नदी गङ्गेत्यर्थः। अतारि तीर्णा तरतेः कर्मणि लुङ् ॥५७॥

चतुर्भिः श्लोकैः गङ्गां वर्णयति—

**स्वर्गारोहणसोपानरूपवीचिपरम्परा ।**
**रममाणसुरस्त्रीणां कुचकोकैरलङ्कृता ।।५८।।**

**स्वर्गेति ।** स्वर्गारोहणाय सोपानानि, तेषां रूपमिव रूपं यस्याः सा तादृशी वीचिपरम्परा तरङ्गसन्ततिर्यस्याः सा तथोक्ता । रममाणाः क्रीडन्त्यः याश्च ताः सुरस्त्रियश्च तासां कुचकोकैः स्तनचक्रवाकैः अलङ्कृता भूषिता ।।५८।।

**पातालोत्था हि भोगाभमग्नाङ्गविहगाननैः ।**
**हंसैर्वेगादिवानीतैर्लक्ष्या हैमवतोपलैः ।।५९।।**

**पातालेति ।** पातालादुत्तिष्ठन्तीति पातालोत्थाः ते च ते अहयश्च सर्पाः तेषां भोगाः फणाः तेषां कान्तिः भा येषां तानि तथोक्तानि मग्नानि अङ्गानि शरीराणि येषां ते तथोक्ताः, ते च ते विहगाश्च जलकुक्कुटा इत्यर्थः । तेषामाननानि मुखानि पातालोत्था हि भोगाभानि च तानि मग्नाङ्गविहगाननानि च तैर्वेगाज्जलवेगात् आनीतैश्च हैमवतोपलैः हिमवद्गिरिसम्बन्धिपाषाणैरिवाङ्कितैः हंसैश्च लक्ष्या दर्शनीया ।।५९।।

**सागता शमितायासारावायामितिधामभूः ।**
**निजमारुतधूताघापाता सन्ततभा भुवि ।।६०।।**

*सा । आगता । शमितायासा । आरावाया । अमितिधामभूः ।*
*निजमारुतधूताघापाता । सन्ततभा । भुवि ।।*

**सेति ।** सकललोकप्रसिद्धा भुवि आगता शमितः अपहृतः आयासो जनखेदो यया सा शमितायासा, आरावं तरङ्गध्वनिं अयतेः प्राप्नोतीत्याराावाया अयतेः पचाद्यच्प्रत्ययः । न विद्यते मितिः सादृश्यं येषां तानि अमितीनि असदृशीनि यद्वा अमितीनि अपरिमितानि, अपरिमितानि च तानि धामानि स्वर्गादीनि च तेषां भूः कारणं स्वर्गादिपुण्यलोकप्रदेत्यर्थः । निजश्चासौ मारुतश्च तेन धूतः अपनीतः अघापातः पापागमः यस्याः सा तथोक्ता, सन्तता अविच्छिन्ना भा कान्तिर्यस्याः सा तथोक्ता । अनुलोमश्लोकः ।।६०।।

विभुभाततसन्तापाघाताधू [स्] तरुमाजनिः ।
भूमदा[?] तिमियावारा सायाता शमितागसा ।।६१।।

विभ्वित्ति । विभ्वी सर्वतो व्याप्ता मा कान्तिर्यस्या विभुभा आततः विस्तृतः स चासौ सन्तापश्च तेन आधूतः सन्तापजनितप्राणिखेद इत्यर्थः । तमाधुन्वति अयं गमयन्तीत्याधूतध्वः 'धूङ् कम्पन' इत्यस्मात् क्विप् । ते च तरवश्च तीरोत्पन्ना वृक्षाः तेषां मा लक्ष्मीः तस्या जनिरुत्पत्तिस्थानम् आततसन्तापाघातरुमाजनिः । भूमानं वैभवं ददातीति पोषयतीति भूमदा वैभवप्रदेत्यर्थः । तिमीन् मत्स्यविशेषान् याति प्राप्नोतीति तिमिया आयातेन आगमेन सपोता सा। शमितं आगः अपराधो येन तथोक्तं तेन वारा जलेन उपालक्षिता गङ्गा अतारीति पूर्वेणान्वयः ।।६२।।

महेन्द्रजारतासाक्षी सान्द्रपादपसङ्कुलः ।
रामलक्ष्मणगाधेयैः प्रपेदे गौतमाश्रमः ।।६२।।

महेन्द्रेति । रामलक्ष्मणगाधेयैः कर्तृभिः । महेन्द्रस्य जारता जारत्वं तस्या साक्षिणः ते च ते सान्द्रपादपाश्च तैः सङ्कुलः व्याप्तः गौतमाश्रमः प्रपेदे प्राप्तः । पदेः कर्मणि लिट् ।।

चलत्काषायशाटीभिर्जपापाटलकान्तिभिः ।
उपासनप्रसन्नाभिस्सन्ध्याभिरिव भूषितः ।।६३।।

त्रिभिः श्लोकेन गोतमाश्रमं वर्णयति—

चलदित्यादिना । जयाकुसुमवत् पाटला कान्तिर्यासां तास्ताभिः अत एव उपासनेन प्रसन्नाभिः प्रत्यक्षाभिः सन्ध्याभिरिव स्थिताभिः चलन्त्यश्च ताः काषायशाट्यश्च ताभिर्भूषितः अलङ्कृतः ।।६३।।

---

१—मथा, 'क'

न्याये जिगीषयान्योन्यं कृतदूषणभूषणैः ।
शोभितः कोटरालीनशारिकाशुकशावकैः ॥६४॥

न्याय इति । न्याये गौतमोक्तप्रमाणादिषोडशपदार्थनिरूपणप्रधानशास्त्रे अन्योन्यं जिगीषया जेतुमिच्छया दूषणानि च भूषणानि च [भूषणा दूषणा] कृतानि यैस्तैः परमतमालम्ब्य शारिकाशावकै दूषणे क्रियमाणे शुकशावकाः गोतममतं स्थापयन्तीति भावः । शारिकाशुकानां शावकाः डिम्भाः तैः भूषितः अलङ्कृतः । तत्र मुनयः शास्त्रेषु परस्परं विवदन्त इति किमु वक्तव्यमिति भावः ॥६४॥

शार्दूलनखनिर्धूतकण्डूभिर्मण्डलैर्गवाम् ।
अलङ्कृतोऽभितो बर्हिपिच्छच्छायेशयाहिभिः ॥६५॥

शार्दूलेति । शार्दूलनखैः निर्धूता नाशिता कण्डूतिः येषां तानि, तैः गवां मण्डलैः बर्हिपिच्छानां मयूरकलापानां छाया बर्हिच्छाया तत्र शेरत इति शयाः, ते च अहयश्च सर्पाः तैः छायाबाहुल्य इत्येकवद्भावः 'तत्पुरुषे कृति बहुलमिति'[1] सप्तम्या अलुक् । अभितः अलङ्कृतः अनेन तत्रत्यमृगपक्ष्यादीनां मुनितपोमहिम्ना परस्परविरोधो नास्तीत्युक्तं बोध्यम् । एतादृशो गौतमाश्रमः प्रपेद इति पूर्वेणान्वयः ॥६५॥

जनको मुक्तिकान्तायास्सिन्धुकान्तासहोदरः ।
रामपादपरागोऽत्र मुनिकान्तामजीजनत् ॥६६॥

जनक इति । अत्र गौतमाश्रमे मुक्तिरेव कान्ता मुक्तिकान्ता तस्या जनकः उत्तमु [?]····· सिन्धुकान्ता] गङ्गा तस्याः सहोदरः । उभयोरपि विष्णुपादोत्पन्नत्वादिति भावः । रामपादपरागः मुनिकान्तामहल्यां शापदग्धामितिभावः । अजीजनत् प्रादुर्भूतां कृतवान् ॥६६॥

---

१—अष्टाध्यायी ६।३।१४

**अहल्यां शापनिर्मुक्तां प्रपेदे पादलोचनः ।**
**विधुन्तुदसमुद्गीर्णां कलामिव कलानिधिः ॥६७॥**

**अहल्यामिति ।** पादे लोचनं यस्य स पादलोचनो गोतमः शापनिर्मुक्तामहल्यां……[?] कलानिधिश्चन्द्रः । विधुन्तुदसमुद्गीर्णां राहूज्झितां कलामिव प्रपेदे प्राप्तवान् । उपमालङ्कारः ॥६७॥

**सपर्यया दारचितमहसा रञ्जितोदयः ।**
**स पर्ययादारचितमहसा रञ्जितोदयः ॥६८॥**

*सः पर्ययात् । आरचितमहसारम् । जितोदयः ।*
(अर्धयमकम्)

**सपर्ययेति ।** जितः उदयः शत्रूणामुदयो येन सः जितोदयः स रामः दारचितमहसा दारैरहल्यया चितं सम्पादितं महस्तेजो यस्य स तथोक्तः तेन गोतमेन कृत इति शेषः । सपर्यया पूजया रञ्जितः पूजितः कृतातिथ्यः सन्नित्यर्थः । अतएव दयत इति दयः आदरवान् सन्, दयते : पचाद्यच् प्रत्ययः । आरचितमहसारम् आरचितः कृतः महसारः [?][1] उत्सवश्रेष्ठो यस्मिन् कर्मणि तद्यथा तथा पर्ययात् गोतमाश्रमाग्निगत इत्यर्थः । अयतेर्लङ् । अर्धयमकम् ॥६८॥

**त्रयस्ते मिथिलामेत्य जनकेन प्रपूजिरे ।**
**शतानन्दसनाथेनाप्यनन्तानन्दशालिना ॥६९॥**

ते त्रयः रामलक्ष्मणविश्वामित्राः मिथिलामेत्य प्राप्य शतानन्दसनाथेनापि शतानन्दयुक्तेनापि अनन्तानन्दशालिना जनकेन [प्र]पूजिरे पूजिताः । पूजेः कर्मणि लिट् । अत्र शतसंख्यानन्दसहितेनाप्यनन्तानन्दशालिनेति शब्दतो विरोधः । शतानन्दो नाम गौतमपुत्रः स्वपुरोहितः ।

---

१—महसाग्र, 'क'

तत्सहितेन अनन्तानन्दशालिना अपरिमितसंतोषशालिनेति परिहारः। विरोधाभासोऽलङ्कारः ॥६९॥

**ततोऽनयद्धनूरत्नं गाधेयस्य गिरीशितुः।**
**नृपो मग्ना [?][1] नृपाः सारेऽगाधे यस्य गिरीशितुः ॥ ७०॥**
*गाधेयस्य। गिरि। ईशितुः। अगाधे। यस्य। गिरीशितुः।*

**तत इति**। ततो अनन्तरं नृपः जनकः ईशितुरैश्वर्यं सम्पन्ननस्य गाधेयस्य विश्वामित्रस्य गिरि वचसि तस्यां गिरीशितुर्महादेवस्य धनूरत्नं धनुः श्रेष्ठम् अनयत् नीतवान्। धनुरेव वर्णयति। यस्येति यस्य धनुषः अगाधसारे बले नृपा राजानो मग्नाः। धनुः चलयितुमपि न शक्ता इत्यर्थः। पादयमकम् ॥७०॥

**करेण हरकोदण्डं उद्धधार स राघवः।**
**करेण कलभः साक्षादिक्षुकाण्डमिवायतम् ॥७१॥**

**करेणेति**। सः राघवः करेण हस्तेन हरकोदण्डं महादेवचापं करेणुः कलभः आयतम् इक्षुकाण्डमिव साक्षात् सर्वप्रत्यक्षं यथा तथा उद्दधार उद्धृतवान्। धरतेर्लिट्। उपमालङ्कारः ॥७१॥

**मेरुचापधनुर्भङ्गमतिवर्षन्न केवलम्।**
**वितेने ताटकारातिर्मानभङ्गं च मानिनाम् ॥७२॥**

**मेरुचापेति**। अतिकर्षन् श्रुत्यन्तं कर्षन् ताटकारातिः रामः मेरुश्चापो यस्य स मेरुचापः शम्भुः तस्य धनुर्भङ्गमेव केवलं न वितेने किन्तु मानिनां मानभङ्गं च वितेन इति सम्बन्धः। रामेण धनुर्भङ्गे क्रियमाणे मानिनां मानभङ्गो जात इति भावः ॥७२॥

**सार्वत्रिकेण तद्भङ्गस्फारवाणेन रावणः।**
**लङ्कायां स्वधनुर्भङ्गशङ्कया विह्वलोऽभवत् ॥७३॥**

---

१—मग्नो, 'क'

**सार्वत्रिकेणेति** । रावणः लङ्कायां सार्वत्रिकेण सर्वत्रव्याप्तेन तस्य धनुषो भङ्गस्तद्भङ्गस्तेन स्फारः स्फुरितः स चासौ बाणश्च तेन स्वधनुर्भङ्गशङ्कया स्वचापभङ्गभ्रान्त्या विह्वलश्चकितोऽभवत् । धनुर्भङ्गध्वनिना लङ्कायां रावणस्य दुर्निमित्तसूचनमभूदिति भावः । भ्रान्तिमदलङ्कारः ।।७३।।

**विपुला विचलालङ्का विपुलागकुलालका ।**
**काल्ला कुटिलालन्न काललापि च लालसा ।।७४।।**

*विपुला । विचला । लङ्का । विपुला । अगकुलालका ।*
*काल्ला । कुटिला । अलम् । न । का । लला । अपि च । लालसा ।*

(मुरजबन्धः)

धनुर्भङ्गध्वनिना लङ्का भूमिश्चोभयं चचालेत्याह—

**विपुलेति** । विपुला विशाला लङ्का विचला अभूदिति शेषः । धनुर्भङ्गध्वनिनेति भावः । अपि च अगकुलालकाः अगानां नगानां कुलान्येवालका यस्याः सा तथोक्ता । कालं लाति आददातीति काल्ला कालसहितेत्यर्थः । लालसा शोभमाना का विपुलाभूमिः कुटिला सती अलं न विचचाल । सर्वापि भूमिः कालेन सह तदानीं चलितेति भावः कालस्योत्पातसाहित्यमेव चलनमिति बोध्यम् । मुरजबन्धः ।।७४।।

**सबन्धुतां ततोऽतीतापत्तिपङ्क्तिरथायुताम् ।**
**मैथिलोऽनीनयत् सेभपत्तिपङ्क्तिरथायुताम् ।।७५।।**

*सः । बन्धुताम् । ततः । अतीतापत्तिपङ्क्तिरथायुताम् ।।*
*मैथिलः । अनीनयत् । सेभपत्तिपङ्क्तिरथायुताम् ।।*

**स इति** । ततः धनुर्भङ्गानन्तरं स मैथिलो जनकः अतीताः पत्तिपङ्क्तयः रथायुतानि इत्यतीतापत्तिपङ्क्तिरथायुताम्, इभाश्च पत्तिपङ्क्तयश्च रथायुतानि इत्येकवद्भावः । अनीनयत् नीतवान्, ग्रामजनेनेत्यादिना दशरथादिबन्धुसमूहमाकारितवानित्यर्थः । पादयमकम् ।।७५।।

निर्मितानेकमाणिक्यकायमाना समन्ततः ।
पुरी रराज मुद्वृद्धकायमानासमन्ततः ॥७६॥

*कायमाना । समन्ततः । कायमाना । असमम् । ततः ।*

(पादयमकम्)

**निर्मितेति ।** ततोऽनन्तरं समन्ततः सर्वत्र माणिक्यानां कायमाना महोर्ध्वं स्तम्भनिर्मिताः तिर्यग्वेणुदण्डाच्छादिता आवासविशेषा अनेके च ते माणिक्य-कायमानाश्च निर्मिताः अनेकमाणिक्यकायमानाः यस्यां सा तथोक्ता पुरी मिथिला मुद्वृद्धकायमाना मुदा सन्तोषेण वृद्धम् अभिवृद्धिं कायमाना पौरजन-शरीराणां मानं परिमाणं यस्यां सा तथोक्ता सति । असमं असदृशं यथा तथा रराज राजितवती । राजेर्लिट् । पादयमकम् ॥७६॥

स तां रामस्सतामग्रे प्रतिजग्राह जानकीम् ।
जनकान्मेनकापुत्रीं पिनाकीव हिमाचलात् ॥७७।

**स इति ।** स रामः सतां सत्पुरुषाणाम् अग्रे जनकात् सकाशात् तां प्रसिद्धां जानकीं सीतां हिमाचलात् सकाशात् मेनकापुत्रीं पार्वतीं पिनाकीव परमेश्वर इव प्रतिजग्राह प्रतिगृहीतवान् ॥७७॥

उद्दामविलसत्तेजः कृशानौ रघुपुङ्गवः ।
कार्तवीर्यस्य वैरीव लाजहोमं समातनोत् ॥७८॥

**उद्दामेति ।** रघुपुङ्गवो रामः कार्तवीर्यस्य वैरी जामदग्न्य इव उद्दाम प्रौढं विलसत् प्रकाशमानं च तेजो [1][?] यस्य सः तथोक्तः, सचासौ कृशानुश्च वैवाहिकाग्निः वैवाहः तस्मिन् उद्दामविलसत्तेजः कृशानुः प्रतापाग्निस्तस्मिन् इत्यर्थः । लाजहोमं लाजानां होमम् अन्यत्र रज्ञां होमं लरयोरभेदः इति न्यायात् समातनोत् कृतवान् ॥७८॥

---

१—चेतो 'क'

**माण्डवीं भरतः श्रीमानुर्मिलामपि लक्ष्मणः ।**
**शत्रुघ्नः श्रुतकीर्तिञ्च श्रुतिकीर्तिरिवावहत् ।।७६।।**

**माण्डवीति** । श्रीमान् भरतः माण्डवीनामकन्यकां लक्ष्मणोऽपि उर्मिलानामकन्यां श्रुतिकीर्तिः शत्रुघ्नः श्रुतकीर्तिर्नामकन्यकाम् उदावहत् परिणीतवानिति प्रत्येकं सम्बन्धः । उर्मिला जनकस्य और [सी] पुत्री माण्डवीश्रुतकीर्ती तु कुशध्वजस्य पुत्र्यौ इति ज्ञेयम् ।।७६।।

**तदानद्धैः समुत्तालैः ननृते दिवि नर्तकैः ।**
**तदानद्धैः समुत्तालैर्निपेते पुष्पवृष्टिभिः ।।८०।।**

*तदा । आनद्धैः । समुत् । तालैः । तदानद्धैः । समुत्तालैः ।*

**तदेति** । तदा विवाहकाले तदानद्धैः तैः नर्तकैरानद्धैः बद्धैः समुत्तालैः सम्यगुत्तालैः गम्भीरैः आनद्धैः मुरजादिवाद्यैः आनद्धं मुरजादिकमित्यमरः । तालैः कालस्य वाद्यविशेषैश्च उपलक्षितैः नर्तकैः अक्षरो मुख्यो दिव्ये गगने समुत् सहर्षं यथा तथा ननृते । नृत्तं नृत्यतेर्भावे लिट् । पुष्पवृष्टिभिश्च निपेते । निपतितम् गगनादिति भावः । पतेर्भावे लिट् ।।८०।।

**तनयैराजगमाथ सूर्यान्वयसमुन्नतैः ।**
**सहायोध्यां दशरथः सूर्यान्वयसमुन्नतैः ।।८१।।**

**तनयैरिति** । अथ विवाहानन्तरं दशरथः सूर्यान्वयसमुन्नतैः सूर्यवंशमहोन्नतैः सूर्यान्वयसमुन्नतैः सूर्यानां नवोढानाम् अन्वयेन सम्बन्धेन समुदः सन्तोषाः ते च ते नताश्च विनताः विशेषेण समासः तैः तनयैः रामादिभिः पुत्रैः सह अयोध्यां प्रति आजगाम गतवान् । गमेर्लिट् । पादयमकम् ।।८१।।

**सारभूरितरसाहसेनया सार भूरितरसा हसे नया ।**
**सारभूरितरसा हसेनया सारभूरितरसाह सेनया ।।८२।।**

*सारभूः । इतरसाहसेन । या । सा । आर । भूरितरसा । हसे ।नया ।*
*सारभूरितरसा । हसेनया । सारभूः । इतरसा । आह । सेनया ।।*

(चतुष्पादयमकम्)

सारेति । अस्य प्र[1][?]विभागः—सारभूः इतरसाहसेन । या । सा । आर । भूरितरसा । हसे । नया । सारभूरितरसा । हसेनया । सारभूः । इतरसा । आह । सेनया । सारेण बलेन भवति प्रादुर्भवतीति सारभूः इतर-साहसेन इतरेषु शत्रुषु विषये साहसेन उपलक्षिता सा प्रसिद्धा हसेन हासेन या नीतिप्रति उचितस्थल एव सा साहसं कुर्वतीत्यर्थः । सारभूरितरसा, अरैः सहितानि साराणि चक्राणि तैः भूरितः भूरीकृतः । भूरिशब्दात्तत्करोतीति ण्यन्तात्कर्मणि क्तः । रसः उत्साहो यस्यास्सा तथोक्ता । हसेनया हसन्तीति हसाः ते च ते इनाश्च राजान इत्यर्थः, तान् याति प्राप्नोतीति हसेनया हसद्राज-युक्तेत्यर्थः । इतरसा प्राप्तरसा आक्रान्तभूमीति यावत् या सेना भूरितरसा अधिकवेगेन इह मार्गे आर आगतवती । यत्तदोर्नित्यसम्बन्धात् । तयेति पदमध्याहर्तव्यं तथा च तया सेनया उपलक्षितः सारभूः सारा श्रेष्ठा भूः भूमिर्यस्य सः । उत्तरकोसलेश्वरो दशरथ आह वसिष्ठं प्रत्युक्तवानित्यर्थः । आहेति तत्कालापेक्षया वर्तमानत्वनिर्देश इति न कोऽपि दोषः । चतुष्पाद-यमकम् ।।८२।।

प्रदक्षिणं मे हरिणा वहन्ति
खगाः कथन्नु प्रतिकूलभावम् ।
इत्यूचिषि क्ष्माभृति तत्र रामो
दुःशासरागा इतिघोष आसीत् ।।८३।।

दशरथवचनमेवाह—प्रदक्षिणमिति । हे भगवन्निति शेषः । मे मम हरिणाः मृगाः प्रदक्षिणं वहन्ति प्रदक्षिणं कुर्वन्तीत्यर्थः । खगाः पक्षिणः प्रतिकूलभावं प्रातिकूल्यं कथन्नु वहन्ति अपशकुनं कथं कुर्वन्तीत्यर्थः । इत्यनेन प्रकारेण क्ष्माभृति दशरथे ऊचिषि सति उक्तवति सति तत्र तस्मिन् समये दुःशासनः दुःखेन शासितुं शक्यः । शासेः कृच्छार्थे औणादिक उकारः । रामो जामदग्न्य आगात् आगतः इति घोषः सेना कलकला आसीत् । आस्तेर्लङ् । वैदिकश्चतुर्थपादः ।।८३।।

---

१—द, 'क'

भृगुपतिधनुराशु भूरि कर्षन्
रघुतिलकोपजहार तस्य तेजः ।
उदयगत इवातुषारभानु-
स्तुहिनरुचेरिव स क्षपावसाने ।८४।।

भृग्विति । रघुतिलकः सः रामः भूरि अधिकं भृगुपतिधनुर्जामदग्न्यचापं कर्षन् तस्य जामदग्न्यस्य तेजः कर्मक्षपावसाने प्रातःकाले उदयगतः उदयाचल-स्थितः अतुषारभानुः सूर्यस्तुहिनरुचेश्चन्द्रस्य तेज इव आशु शीघ्रं अपजहार अपहृतवान् धनुषकर्षणमात्रेण जामदग्न्यः पराभूत इति भावः ।।८४।।

अमुचद्विशिखं रघुवंशमणि-
र्भृगुरामसमागमनात्कुपितः ।
अयमस्य परः परलोकगते-
र्विनिवारणकृत्परिघो व्यजनि[1?] ।।८५।।

अमुचदिति । भृगुरामस्य समागमनात् कुपितः रघुवंशमणिः [रामो] विशिखं बाणम् अमुचत् मुक्तवान् । मुचेर्लङ् । परः उत्कृष्टः अयं बाणः अस्य जामदग्न्यस्य परलोकगतेः विनिवारणकृत् निवृत्तिकरः परिघः द्वारावरोध-दण्डः व्यजनि जातः । तोटकवृत्तम् ।।८५।।

तनयविजयलक्ष्मीदर्शनप्रातिचेतान्
प्रविमलतरमुक्तातोरणालीपरीताम् ।।
पुरमविशदुदारां पौरुहूतस्सखायं
शरदुदितसुधांशुर्द्यौरिवोदीतताराम् ।।८६।।

1—रजनि, 'क'

इति श्रीचरकूरिकोडुण्भट्टोपाध्यापौत्रेण यज्ञनारायणभट्टतनयेन वेङ्कटेश्वरेण सर्वाम्बिकागर्भशुक्तिमुक्तामणिना विरचिते चित्रबन्धरामायणे महाकाव्ये बालकाण्डकथा सम्पूर्णा प्रथमः सर्गः ।।

तनयेति । तनयस्य रामस्य विजयलक्ष्म्याः दर्शनेन प्रीतं चेतो यस्य स तथोक्तः । पौरुहूतः इन्द्रसम्बन्धिसखा अय दशरथः प्रविमलत [र] श्च ताः मुक्ताश्च तासां तोरणाल्यस्ताभिः परीतां व्याप्ताम् उदारां पुरीमयोध्यां रेफान्तोऽयं शब्दः । शरदुदितसुधांशुः शरत्कालचन्द्रः उदितताराढ्यां [द्यौरिव] आकाशमिव अविशत् प्रविष्टः । विशेलंङ् । उपमालङ्कारः । मालिनीवृत्तं तल्लक्षणं तु ननमययुतेयं मालिनीभोगिलोकैरिति ।।८६।।

इति श्रीचरकूरिकोण्डुभट्टोपाध्यायतनययज्ञनारायणभट्टविरचितायां
चित्रबन्धरामायणव्याख्यायां बाल[प्रबो]धायां प्रथमः सर्गः ।

## द्वितीयः सर्गः

सशत्रुघ्नः शुभरतो भरतो मातुलालयम् ।
ततो जगाम पुरतः पुरतोगामिवाहनः ॥१॥

इदानीं वेङ्कटेश्वरकविरयोध्याकाण्डकथामुपक्रमते—

स इति । ततः अयोध्याप्रवेशानन्तरं शुभरतः कल्याणनिरतः सशत्रुघ्नः शत्रुघ्न सहितः भरतः पुरतोगामिवाहनः पुरोगताश्च सन् पुरतः अयोध्यायास्सकाशात् मातुलालयं युधाजिद्गृहं प्रति जगाम गतः । सन्दष्टयमकम् ॥१॥

राजराजो राजराजराजो जररजा जजः ।
रराजोऽजरराजाजौ रराजाजिर्जरारुजा ॥२॥

*राजराजः । राजराजराजः । जररजाः । जजः ।*
*रराजः । अजरराजाजौ । रराज । आजिः । जरारुजा ॥*

(द्व्यक्षरी)

राजेति । राज्ञां राजा राजराजः कुबेरः तद्वद्राजते प्रकाशत इति राजराजराजो जरति जरं जीर्णं रजः रजोगुणो यस्य सः जररजाः ।

अजरराजः निर्जरराजः इन्द्रः तस्याजौ युद्धे राराजः अत्यन्तं प्रकाशमानः 'राजेर्यङन्तात्पचाद्यच्' जजः योद्धा जज आयोधन इत्यस्मात्पचाद्यच्। राजराजः राजश्रेष्ठः आजिर्दशरथः जराहजा जरैव रुग् रोगः तया रराज राजितवान्। द्व्यक्षरी ॥२॥

**स राजा दुर्भरं भूरिजरावेशवशालसः।**
**परिमन्दशिरःकम्पैर्न्यषेधिदिव भूभरम् ॥३॥**

द्वाभ्यां श्लोकाभ्यां दशरथस्य जरामेव वर्णयति—

**स इति**। भूरिजरावेशवशेन अधिकवार्धकप्रवेशबलेन अलसः श्रान्तः स राजा दशरथः परिमन्दशिरःकम्पैः दुर्भरं भूभरं भूमिभारं न्यषेधिदिव निषिद्धवानिवेत्युत्प्रेक्षा। सेधतेर्लुङ्। अहं जीर्णोऽस्मि, इतः परं मया भूमिर्धर्तुं न शक्यते इति निषेधं कृतवानिवेत्यर्थः ॥३॥

**पलितं तस्य केशेषु स्खलितं क्रमणोदये।**
**गलितं स्वरसम्यक्त्वे चलितं हृदि चाभवत् ॥४॥**

**पलितमिति**। तस्य दशरथस्य केशेषु पलितं पाण्डुरत्वं क्रमणोदये गमनप्रादुर्भावे स्खलितं स्खालित्यं स्वरसम्यक्त्वे कण्ठस्वरसामञ्जस्ये गलितं भ्रंशनं हृदि मनसि चलितं चाञ्चल्यं च अभवदिति प्रत्येकं सम्बन्धः। स्खलितादौ स्थलत्रयेऽपि भावे क्तप्रत्ययः ॥४॥

**कलासाकल्यसम्पन्नं स्फायत्कुवलयोत्सवम्।**
**रामचन्द्रं तदालोक्य मुमुदे पार्थिवाम्बुधिः ॥५॥**

**कलेति**। पार्थिवः दशरथः स एवाम्बुधिः तदा जराप्रवेशसमये कलानां विद्यानां साकल्यं तेन सम्पन्नं चन्द्रपक्षे स्पष्टोऽर्थः। स्फायन् वर्धमानः कुवलयोत्सवः भूमण्डलोत्सवः अन्यत्र कुवलयोत्सवो नीलोत्पलोत्सवः येन सः तथोक्तः तम्। राम एव चन्द्रः तमालोक्य मुमुदे मुदितवान्। रामस्य सार्वभौमलक्षणलक्षितत्वादिति भावः ॥५॥

**सर्वतो विबुधैर्गीतो यदीयः कीर्तिमण्डलः ।**
**बम्भ्रम्यते सम्भ्रमेण सर्वतोभद्रबन्धवत् ॥६॥**

द्वाभ्यां श्लोकाभ्यां रामचन्द्रस्य कीर्तिमेव वर्णयति—

**सर्वत** इति । यदीयः यस्य रामस्य सम्बन्धी कीर्तिमण्डलः विबुधैर्देवैरन्यत्र पण्डितैः गीतः सन् सर्वतोभद्रबन्धवत् सर्वतोभद्रबन्धेन तुल्यं सम्भ्रमेण सर्वतः बम्भ्रम्यते, पुनः पुनः भ्रमति 'भ्रमेः कर्तरि यङ् प्रत्ययः । सर्वदिगन्तेषु समन्ततो विभ्रान्तो भवतीत्यर्थः । सर्वतोभद्रबन्धस्य सर्वतोभ्रमणप्रकारस्तु अस्मिन् सर्गे स्वस्थापन एव वक्ष्यते ॥६॥

**हारन्ति हरितां वारिपूरन्ति गिरिसानुषु ।**
**कर्पूरन्त्यधुना यस्य यशांसि जगदण्डके ॥७॥**

**हारन्तीति** । यस्य रामस्य यशांसि अधुना इदानीमपि हरितां दिशां हारन्ति हारा इवाचरन्ति । हारशब्दात् आचारात् क्विप् । 'नाद्यन्ता धातव' इति धातुसंज्ञायां शवाद्युत्पत्तिः । एवमुत्तरत्रापि द्रष्टव्यम् । गिरिसानुषु पर्वतप्रस्थेषु वारिपूरन्ति वारिपूरो निर्झरास्त इवाचरन्ति । जगदण्डके ब्रह्माण्डभाण्डे कर्पूरन्ति कर्पूर इवाचरन्ति । रामकीर्तिः कर्पूरसाम्येन ब्रह्माण्डभाण्डस्य करण्डसाम्यं व्यज्यत इत्यलङ्कारेण अलङ्कारध्वनिः ॥७॥

**राज्यलक्ष्मीर्विहायैनं चकमे रघुनन्दनम् ।**
**वृद्धं संत्यज्य युवतीर्युवानं खलु वाञ्छति ॥८॥**

**राज्येति** । राज्यलक्ष्मीः एवं दशरथं विहाय रघुनन्दनं चकमे कांक्षितवती । कमेर्लिट् । तथाहि युवतीर्वृद्धं सन्त्यज्य युवानं वाञ्छति खलु । सामान्यस्य विशेषसमर्थनरूपोऽर्थान्तरन्यासः । अनेन रामचन्द्रस्य दशरथादप्यधिकगुणशालित्वं व्यज्यते ॥८॥

**राज्येऽभिषेक्तुं तं धीमानवनीतलवारिभिः ।**
**इयेष मौक्तिस्फारनवनीतलवारिभिः ॥९॥**

*अवनीतलवारिभिः । नवनीतलवारिभिः ।*

**राज्य इति ।** धीमान् दशरथः तं रामं राज्ये मौक्तिकस्फारनवनीत-लवारिभिः मौक्तिकवत् स्फारा रम्याः नवा नूतनाः नीताः प्राप्तालवालयः विन्दुपरम्पराः येषां तानि तथोक्तानि तैः अवनितलवारिभिः भूतलानेकतीर्थैः अभिषेक्तुभियेष इष्टवान् । इषेर्लिट् ।।९।।

**अलङ्कुर्वंस्तदाकर्ण्य सहितो नगरञ्जनः ।**
**वसन्त इव रेजे श्रीसहितो नगरञ्जनः ।१०।।**

*सहितः । नगरम् । जनः । श्रीसहितः । नगरञ्जनः ।*

**अलमिति ।** सहितः मित्रवर्गसहितः जनः पौरजनः तत् रामाभिषेक-रूपं कृत्यमाकर्ण्य नगरमयोध्यानगरम् अलङ्कुर्वन् सन् अतएव श्रीसहितः लक्ष्मीसम्पन्नः नगान् वृक्षान् रञ्जयति पुष्पितान् करोति [इति] नगरञ्जनः, वसन्त इव रेजे राजितवान् ।।१०।।

**रोहिण्येवाम्बरे चन्द्रः श्रीकामः पितुराज्ञया ।**
**राघवः सीतयागारे निषसाद धृतव्रतः ।।११।।**

(वैदिकश्चतुर्थपादः)

**रोहिण्येति ।** राघवः रामः पितुराज्ञया श्रीकामः राज्यलक्ष्मीकामः सन् अतएव सीतया सह अगारे देवतागृहे धृतव्रतः बद्ध[क]क्ष[:] सन् अम्बरे आकाशे रोहिण्या सह श्रीकामः तेजस्कामश्चन्द्र इव निषसाद निविष्टवान् । सदेर्लिट् । चतुर्थपादो वैदिकः ।।११।।

**तेन कोपारुणा रेजे रघुवंशविभेदिनी ।**
**धूमायमानवदना दावकीलेव मन्थरा ।।१२।।**

**तेनेति ।** रघुवंशं विभेत्तुं शीलमस्या अस्तीति रघुवंशविभेदिनी रघुकुले मित्रभेदक[रणेक्षमा]त एव मन्थरानाम काचन कैकेयीदासी तेन रामोत्सवेन हेतुना कोपारुणा क्रोधरक्ताङ्गी सती धूममुद्वमत् धूमायमानं वदनं यस्याः सा तथोक्ता विवर्णमुखी सतीत्यर्थः अतएव अ [?] वेणुदाहिका धूमायमान-वदना दावकीला दावाग्निज्वालेव रेजे राजितवती ।।१२।।

**तया गिरा निर्मथिते कैकेयीहृदयाम्बुधौ ।**
**तत्क्षणे विकटः कोपः कालकूटानलोऽजनि ॥१३॥**

**तयेति ।** तया मन्थरया गिरा करणेन मन्थराकल्पयेति भावः । कैकेय्याः केकयराजपुत्र्याः 'केकय[मित्रयु]प्रलयानां यादेरिया'देशः[1] । हृदयमेवाम्बुधिः समुद्रस्तस्मिन् निर्मथिते सति तत्क्षणे मथनसमये एव विकटः सकललोक-भयङ्करः कोपश्च कालकूटानलः अजनि जातः ॥१३॥

**मध्येऽगारं निराहारा सा रुषा न्यपतद्भुवि ।**
**महोल्केवाचिरादेष्यत् सर्वानर्थस्य सूचिका ॥१४॥**

**मध्य इति ।** केकयी मध्येऽगारं [राजभवनमध्ये निराहारा] भोजन-रहिता सती रुषा कोपेन अचिराच्छीघ्रमेव एष्यतः सर्वानर्थस्य रामप्रवासादि-रूपस्येत्यर्थः सूचिका सूचयित्री महोल्केव भुवि न्यपतत् पतिता ॥१४॥

**गलिताः क्ष्मामलञ्चक्रुः तस्या भङ्गुरहारतः ।**
**मुक्तास्तदा करादिन्दोर्वनीं हिमकणा इव ॥१५॥**

**गलिता इति ।** सा तदा तत्काले तस्याः कैकेय्याः [भङ्गुरहारतः] भग्नहारात् गलिताः भ्रष्टा मुक्ताः मौक्तिकानि इन्दोश्चन्द्रस्य करात् किरणाद् गलिता हिमकणाः तुषारबिन्दवः वनीम् अटवीमिव क्ष्मां भूमिम् अलञ्चक्रुः अलङ्कृतवत्यः ॥१५॥

**भूमौ भीमामिमां भामामपि पापोपमां प्रभुः ।**
**भीभूम्नाभिभवं प्राप्तो बभ्राम प्राप्य भूमिपः ॥१६॥**

**(ओष्ठ्यक्षरम्)**

**भूमाविति ।** प्रभुः भर्ता [भूमि]पो दशरथः भूमौ स्थितामिति शेषः । अतएव भीमां भयङ्करीं पापोपमां साकारपापतुल्याम् इमां भामां कैकेयीं प्राप्य भीभूम्ना भयातिशयेन अभिभवं तिरस्कारं प्राप्तः सन् बभ्रामापि भ्रान्तश्चे-त्यर्थः ओष्ठ्यक्षरम् । श्लोकप्रधानाक्षराणामोष्ठ्यत्वात् ॥१६॥

---

१—अष्टाध्यायी ७।३।२

अनेन साथ पृष्टेयमनेन विभुना भृशम् ।
सावनेः वरयोः स्मारं भावनेवोदजीजनत् ॥१७॥

अनेनेति । अथानन्तरम् अनेनसा पापरहितेन अनेन अवनेर्विभुना भूपतिना दशरथेनेति यावत् इयं कैकेयी भृशं पृष्टा । सा कैकेयी भावनेव भावनासंस्कार इव भावनानाम स्मृतिहेतुः भुवनजन्यसंस्कारविशेष इति तद्विदः, वरयोः पूर्वदत्तयोरिति भावः, स्मारं स्मरणम् उदजीजनत् । जनितवती ॥१७॥

सिंहासने वने वासं रामस्यैकेन सान्यतः ।
सिंहासनेऽवने वासं भरतस्यान्वयाचत ॥१८॥

सिंहासने । वने । *वासम् । सिंहासने । अवने । वा । आसम् ।*

तयोः वरयोः याचनाप्रकारमेवाह—सिंहासन इति । सा कैकेयी एकेन वरेण सिंहानामासने स्थाने वने विपिने रामस्य वासं स्थानम् अन्यतः अन्येन वरेण 'सार्वविभक्तिकस्तसिल्', भरतस्य सिंहासने भद्रपीठे अवनेः रक्षणनिमित्ते आसं वा उपवेशं च । वा शब्दश्चार्थः । अन्वयाचत याचितवती ॥१८॥

पितुरादेशमास्थाय वने गन्तुमियेष सः ।
रामः सत्कुलजाः श्रेयो मन्यन्ते गुरुशासनम् ॥१९॥

पितुरिति । रामः पितुः दशरथस्यादेशमाज्ञां वने गच्छेति नियोगमिति यावत् आस्थाय अङ्गीकृत्य वनं गन्तुमियेष इष्टवान् । इषेर्लिट् । तथा हि सत्कुलजाः सत्कुलप्रसूताः पुरुषाः गुरुशासनं गुर्वाज्ञां श्रेयो मन्यन्ते इति भावः ॥१९॥

माकामी नामुकः कामं कामिनीकामकामुकः ।
मानिकः कामकामोकमनुमेने कुकाननम् ॥२०॥

माकामीति । मां लक्ष्मीं कामयतीति माकामी आदौ राज्यलक्ष्मीकामः इत्यर्थः । अनन्तरं कामिन्याः कैकेय्याः कामस्य मनोरथस्य कामुकः कैकेयीमनोरथपूरण एव कृतसङ्कल्प इत्यर्थः । मानिकः अभिमानी पितुराज्ञामेव

करोमीत्यभिमानवानित्यर्थः । 'अतइनि ठनाविति'[1] ठन्प्रत्ययः । कामकामः मन्मथमन्मथः अमुकः असौ पुरुषः राम इत्यर्थः । अकं दुःखरूपकुकाननं कुत्सितवनं काममत्यन्तम् अनुमेने अङ्गीचक्रे । त्र्यक्षरी ॥२०॥

**वसाने वल्कले तस्मिन् बभूवुर्मुदिताः सुराः ।**
**न कांक्षन्ति परश्रेयो लोके स्वार्थपरायणाः ॥२१॥**

**वसान इति ।** तस्मिन् रामे वल्कले चीरवसने विपिनवसने आच्छादयति सति सुराः मुदिताः सन्तुष्टाः बभूवुः । तथाहि लोके स्वार्थपरायणाः स्वप्रयोजननिरताः पुरुषाः परस्य [ज]नस्य श्रेयः न कांक्षन्ति ॥२१॥

द्वाभ्यां श्लोकाभ्यां रामप्रयाणं कुलकेनाह—

**नागराणां घनश्वासवातनिर्धूतधूलिना ।**
**निरन्तराश्रुपातेन निषिक्तेनाशु वर्त्मना ॥२२॥**

नागराणामिति । नागराणां पौराणां घनेन अधिकेन श्वासवायुना निर्धूता अपगामिता धूलिर्यस्मिन् तत्तथोक्तं तेन निरन्तरेण अश्रुपातेन आशु शीघ्रं निषिक्तेन वर्त्मना मार्गेण रामो निर्ययाविति उत्तरेण सम्बन्धः । अनेन राजागमनवेलायां क्रियमाणो राजोपचारो व्यज्यते ॥२२॥

**छायातपयुतोऽनन्तं गहनं भानुमानिव ।**
**ससीतलक्ष्मणो रामो रथमारुह्य निर्ययौ ॥२३॥**

छायेति । ससीतलक्ष्मणो रामः छायातपाभ्यां युतः भानुमान् सूर्य इव रथमारुह्य अनन्तमपारं गहनं वनं प्रति अन्यत्र गहनं गम्भीरं अनन्तमाकाशं प्रति निर्ययौ यातवान् । यातेर्लिट् ॥२३॥

**अयोध्यानगरी सर्वा गुणाकृष्टा तमन्वगात् ।**
**प्राकारपरिखासौधवीथिकाभित्तिभिर्विना ॥२४॥**

---

१—अष्टाध्यायी ५।२।११५

**अयोध्येति** । सर्वा अयोध्यानगरी गुणाकृष्टा रामगुणाकृष्टा तं रामं प्राकारपरिखासौधवीथिकाभित्तिभिर्विना अन्वगात् अनुसृतवती । अचेतनं वस्तुविना सर्वं चेतनाज्जातमनुयातमिति । विनोक्तिरलङ्कारः ॥२४॥

**दीनाकारैर्निराकुर्वन् कैकेयीपुटभेदनम् ।**
**हाहाकारैर्ययौ कुर्वन् ब्रह्माण्डपुटभेदनम् ॥२५॥**

**दीनाकारैरिति** । पुटभेदनमयोध्यानगरं दीनाकारैः कैकेयीं निराकुर्वन् सन् हाहाकारैः ब्रह्माण्डपुटस्य भेदनं पाटनक्रियां कुर्वन् सन् ययौ ॥२५॥

**कौसल्यायाः करालम्बमालम्ब्य वसुधाधिपः ।**
**गात्रेणैव परं गेहं जगाहे मनसा विना ॥२६॥**

**कौसल्याया इति** । वसुधाधिपो दशरथः कौसल्यायाः करालम्बं भुजयष्टिम् आलम्ब्य मनसा विना गात्रेणैव शरीरेणैव परं केवलं गेहं जगाहे प्रविवेश । मनस्तु राममनुसृत्य गतमिति भावः ॥२६॥

**श्रवणेऽलङ्क्रियां चक्रे चक्रिरे यद्गुणा नृणाम् ।**
**श्रवणेऽलङ्क्रियां चक्रे रामः सीतानुजानुगः ॥२७॥**

*श्रवणे । अलङ्क्रियाम् । चक्रे । श्रवणे । अलम् । क्रियाम् । चक्रे ।*

**श्रवण इति** । यद् गुणाः यस्य रामस्य गुणाः नृणां मनुष्याणां चक्रे चक्राकारे श्रवणे श्रोत्रे कर्णशष्कुल्यामिति जातावेकवचनम् । अलङ्क्रियाम् अलङ्कारं चक्रिरे कृतवन्तः । सकलजनश्रोत्राभिराम इत्यर्थः, स इति शेषः । यत्तदोर्नित्यसम्बन्धात् । सीता च अनुजश्च सीतानुजौ तावेवानुगौ यस्य स तथोक्तः रामः श्रवणे श्रवणनामक्षत्रे या क्रिया चेष्टा ताम्, अलम् अत्यर्थं चक्रे कृतवान् । श्रवणस्यापि नक्षत्रत्रयात्मकत्वादिति भावः । सीतारामलक्ष्मणानां नक्षत्रत्रयात्मकश्रवणनक्षत्रचेष्टासदृशवर्णनात् निदर्शनालङ्कारः ॥२७॥

**रामो गङ्गा[तटे]रूढं शृङ्गबेरं रसाधिकम् ।**
**निषेव्य नगरं ताभ्यां सह तापज्वरं जहौ ॥२८॥**

**राम इति ।** रामः गङ्गातटे रूढं प्रसिद्धं रसाधिकं भूसारश्रेष्ठं षड्रससम्पन्नं वा शृङ्गवेरं नाम नगरं निषेव्य ताभ्यां सीतालक्ष्मणाभ्यां सह ताप एव ज्वरः तापज्वरः तम् अध्वश्रममित्यर्थः, जहौ त्यक्तवान् । अन्यत्र गङ्गातटे रूढं जातं रसाधिकं रससम्पन्नं नगरं विषहरं शृङ्गवेर-मार्द्रं शुण्ठीं निषेव्य तापज्वरं जहाविति अपकृतज्वरातुरसाम्यस्य गम्यत्वात् समासोक्तिरलङ्कारः ॥२८॥

**गुणसौरभ्यसम्पन्नौ गङ्गावीचिमरुद्गुहौ ।**
**शीतलप्रकृती तत्र रामं साधूपचेरतुः ॥२९॥**

**गुणेति ।** गुणानां सौरभ्यं गुणसौरभ्यं मरुत्पक्षे गुणश्चासौ सौरभ्यं च तेन सम्पन्नौ शीतलप्रकृती शीतलस्वभावौ गुहपक्षे शान्तिगुणात् मरुत्पक्षे तरङ्गसम्बन्धाच्चेति भावः । गङ्गावीचिमरुद् गङ्गातरङ्गवायुः स च गुहश्च तौ, रामं साधु यथा तथा उपचेरतुः उपचरितवन्तौ स्वोचितसेवां कृतवन्ता-वित्यर्थः ॥२९॥

**राजपुत्रौ जटाजालशोभिनौ वनलोभिनौ ।**
**गुहेन सीतया गङ्गां तारितौ न तु वारितौ ॥३०॥**

**राजेति ।** वनलोभिनौ व[न]वासलुब्धौ राजपुत्रौ जटाजालशोभिनौ सन्तौ सीतया सह गुहेन गङ्गां तारितौ, गुहेन गङ्गातरणमेव कारितं वनवा-सनिवारणं तु न कारितमिति भावः ॥३०॥

**वनं नवं दिनानादिनदादानवरारवम् ।**
**गतोऽतोऽगजराराजं रामो मारो मनोनमः ॥३१॥**

*वनम् । नवम् । दिनानादिनदादानवरारवम् ॥*
*गतः । अतः । अगजराराजम् । रामः । मारः । मनोनमः ।*

**(प्रतिपदमित्तिलोमम्)**

वनमिति। अतः गङ्गायाः परं पारात् मारः मन्मथकल्पः मनसालनमः अनलो[?] मनोनमः गम्भीरमानस इत्यर्थः रामं नवं नूतनं दिनेषु अनादयः अनागन्तुका अनश्वरा इत्यर्थः। ते च ते नदाश्च तेषामादानं स्वीकारं तेन वरश्रेष्ठ आरवः ध्वनिः यस्य तथोक्तम्। अगजराराजम् अगानां वृक्षाणां जरया राजं राजमानं जीर्णवृक्षैः शोभमानमित्यर्थः। राजतेः पचाद्यच्प्रत्ययः। वनङ्गतः गतवान्। प्रतिपदप्रतिलोमं व्यञ्जनानां प्रधानानामेव प्रातिलोम्यं विवक्षितमिति न कोऽपि दोषः ॥३१॥

यागप्रयोगयोगेद्धं प्रयागवनमेत्य सः।
अतोषयद्भरद्वाजं नियोग इव कर्मणा[1] ॥३२॥

यागेति। सः रामः यागप्रयोगः क्रत्वनुष्ठानं तेन योगस्सम्बन्धः तेन इद्धं प्रकाशमानं प्रयागवनमेत्य प्राप्य कर्मणा नियोग इव कर्मसम्बन्धिसाकाराः पूर्वमिव भरद्वाजम् अतोषयत् सन्तोषितवान्। तुषेर्ण्यन्ताल्लङ्। विष्णुसाक्षात्कारस्य क्रतुसाफल्यसम्पादकत्वादिति भावः ॥३२॥

चित्रकूटवनं प्राप्तौ सीतया सह राघवौ।
पुष्पश्रिया तदादिष्टौ मधुमन्दानिलाविव ॥३३॥

चित्रेति। राघवौ रामलक्ष्मणौ तेन भरद्वाजेन आदिष्टौ सन्तौ सीतया सह पुष्पश्रिया पुष्पलक्ष्म्या सह मधुमन्दानिलाविव वसन्तमलयानिलाविव चित्रकूटवनं प्राप्तौ प्राप्तवन्तौ ॥३३॥

चित्रकूटे महाकूटे कृत्वा पर्णकुटीमुभौ।
अकूटौ सह वैदेह्या तस्थतुः कूटगामिनौ ॥३४॥

चित्रकूट इति। अकूटौ कपटरहितौ सीतया सह कूटगामिनौ मेलनं प्राप्तौ उभौ रामलक्ष्मणौ महाकूटे उन्नतशिखरे चित्रकूटे पर्णशालां कृत्वा तस्थतुः स्थितवन्तौ ॥३४॥

---

१—कर्मणाम्, 'क'

**गुहामुखविनिर्यातैर्व्यालनिःश्वासमारुतैः ।**
**यो भूमिभारजायासान्निशश्वासेव सन्ततम् ॥३५॥**

सप्तभिः श्लोकैः चित्रकूटमेव वर्णयति—गुहेत्यादिना । यश्चित्रकूटः गुहामुखेभ्यो विनिर्यातैः व्यालानां सर्पाणां निःश्वासमारुतैः हेतुभिः भूमिभार-जायासात् भूभरणजातश्रान्तेः सन्ततं निशश्वासेव निःश्वासवानिवेत्यु-त्प्रेक्षा ॥३५॥

**तटाकोर्मिस्फुटैरर्कप्रतिबिम्बैरसंख्यकैः ।**
**पस्पर्ध इव यो मूर्ध्नि सैकभानूदयोदयम् ॥३६॥**

**तटाकेति** । यश्चित्रकूटः असंख्यकैः अनन्तैः मूर्ध्नि शिखरे तटाकोर्मि-स्फुटैः तटाकतरङ्गप्रकटैर्दृश्यमानैरित्यर्थः । अर्कस्य प्रतिबिम्बैर्हेतुभिः सैक-भानूदयः एकसूर्योदयसहितः स चासावुदयश्च उदयपर्वतः तं पस्पर्ध इव । त्वय्येक एव सूर्योदयः मयि त्वनन्तसूर्योदय इति स्पर्धितवानिवेत्युत्प्रेक्षा ॥३६॥

**धातुभिर्विविधाकारैराख्यातप्रत्ययास्पदैः ।**
**साधु नानापतच्छब्दो यः शाब्दिक इवाबभौ ॥३७॥**

**धातुभिरिति** । यश्चित्रकूटः आख्यातप्रत्ययास्पदैः विविधाकारैर्नाना-विधविलपितादिरूपैः अन्यत्र नानाविधरूपैः धातुभिः गैरिकादिधातुभिः अन्यत्र भ्वादिधातुभिः उपलक्षितः साधु नानाविधाः पततां पक्षिणां शब्दा यस्य स तथोक्तः, अन्यत्र साधवो नानाविधाः पतन्तः सिध्यन्तः शब्दास्सु-बन्तरूपा यस्य स तथोक्तः रराज ॥३७॥

**लतातालतरूतशोभिभिः शोभनो नभः ।**
**यातोऽतोयाधरोऽरोधकोलो लोकोत्तमो मतः ॥३८॥**

*लतातालतरूनशोभिभिः शोभनः । नभः ।*
*यातः । अतोयाधरः । अरोधकोलः । लोकोत्तमः । मतः ।*

**लतेति** । लताभिश्च तालतरुभिश्च तरुर्यथा तथा ऊतः प्रोतः आक्रान्त इति यावत्, स चासौ शोभि चेति विशेषणकर्मधारयः इति शोभनः नभोयातः'

अभ्रङ्कषः न धरतीत्यर्थः । तोयस्य अधरः तोयाधरः स न भरतीत्यतोयाधरः । निर्झरादिजलाशयवानित्यर्थः । अरोधकोलः निर्विरोधवराहः 'कोलपोत्रकिरिः कीटिरि'त्यमरः । लोकोत्तमः भूलोकश्रेष्ठः मतः सर्वेषां विहारभूमित्वेन सम्मतः यश्चित्रकूटः आबभाविति पूर्वेणान्वयः ॥३८॥

**सिंहनादसमाकीर्णो भृगुवंशविवर्धनः ।**
**जामदग्न्य इवाभाति यः कषन् राजमण्डलम् ॥३९॥**

**सिंहनादेति ।** यश्चित्रकूटः सिंहनादेन समाकीर्णः अन्यत्र सिंहनादेन युद्धकालक्रियमाणध्वनिविशेषेण समाकीर्णः सन्, भृगुषु सानुषु वंशाः वेणवः तान् विवर्धयतीति विवर्धनः । अन्य [त्र] भृगुमुनिकुलविवर्धनः सन् राजमण्डलं चन्द्रमण्डलं कषन् स्पृशन् अन्यत्र राजमण्डलं क्षत्रियसमूहं कषन् निरुन्धन् अतएव जामदग्न्य इव परशुराम इव आभाति इदानीमपीति शेषः । श्लेषानुप्राणितोपमालङ्कारः ॥३९॥

**उदितेऽर्के प्रयात्यस्तमिन्दौ यो वेणुकेतनः ।**
**अनुचक्रे रथं दिव्यं चक्रद्वितयकीलितम् ॥४०॥**

**उदित इति ।** वेणवः एव केतनानि यस्य तथोक्तः यश्चित्रकूटः अर्के उदिते सति इन्दौ चन्द्रे अस्तं प्रयाति सति चक्रद्वितयेन रथाङ्गद्वयेन कलितं दिव्यं रथम् अनुचक्रे अनुकृतवान् रामजयार्थं द्विचक्रो दिव्य रथ इव स्थित इति भावः ॥४०॥

**दीनसारसभारासा साराभा सरसा नदी ।**
**तस्य का च दरारावा वारारादचकास्यत ॥४१॥**

*दीनसारसभारासा । साराभा । सरसा । नदी ।*
*तस्य । का । च । दरारावा । वारा । आरात् । अचकास्यत ।*

(पादप्रतिलोमम्)

**दीनेति ।** तस्य चित्रकूटस्य आरात् समीपं दीनसारसभारा सादिना सारसभाराणां हंससमूहानाम् आसा स्थानी यस्यां सा तथोक्ता, रामवनवासं

दृष्ट्वा पक्षिणामपि दैन्यमागतमिति [भावः]। भासः सारा श्रेष्ठा आभा कान्तिर्यस्यास्सा, रसा माधुर्यरससहिता दरारावा दरः मन्दः आरावो ध्वनिर्यस्यास्सा तथोक्ता का च नदी कापि नदी मन्दाकिनीत्यर्थः। वारा जलेन अचकास्यत प्रकाशिता। कासृदीप्तावित्यस्मात् कर्मणि लङ्। पादप्रतिलोमम् ॥४१॥

**अध्यारोहति रामे तमयोध्यामेत्य कोविदः।**
**सुमन्त्रस्तस्य वृत्तान्तैः स्वर्गमारोहयन्नृपम् ॥४२॥**

**अध्यारोहतीति।** तं चित्रकूटं रामे अध्यारोहति सति कोविदः रामवृत्तान्तानभिज्ञः सुमन्त्रः अयोध्यामेत्य प्राप्य तस्य[1] [?] रामस्य वृत्तान्तैः वनवासवार्ताकथनैः नृपं दशरथम् आरोहयत् आरोपितवान् रामवार्तां श्रुत्वा दशरथः मृत इति भावः। ४२॥

**अराजके तदावासाः केवलं न कपाटिताः।**
**अयोध्यायां धनाढ्यानां मुखपद्मा नृणामपि ॥४३॥**

अराजक इति। तदा तस्मिन् समये अयोध्यायां अराजके सति धनाढ्यानां नृणां वासा एव केवलं न कपाटिता किन्तु मुखपद्मा अपि कपाटिता। अराजके धनिका आसितुमपि बिभ्यति स्मेति भावः ॥४३॥

**मन्त्रिणो वीक्ष्य तद्धूतमन्त्रैर्मातुलमन्दिरात्।**
**तमाकर्षन् प्रयोगज्ञा भरतं सानुजं हितैः ॥४४॥**

**मन्त्रिण इति।** प्रयोगज्ञा अन्यत्र राज्यकार्यविचारज्ञा अन्यत्र उच्चाटनाकर्षणादिषड्विधप्रयोगज्ञाः मन्त्रिणः अमात्याः मान्त्रिकाश्च तत् अराजकं वीक्ष्य हितैः (हुतैः) इष्टैः अन्यत्र अवर्णचक्रसिद्धसुसिद्धादिशुभकोटिपतितैः हूताः मन्त्रास्तैः[2] (आहूता मन्त्रास्तैः) मातुलमन्दिरात् सानुजं सशत्रुघ्नं भरतम् आकर्षन् आकृष्टवन्तः अन्यत्र आकर्षणप्रयोगं चक्रुः ॥४४॥

---

१—तारास्य, 'क'

२—हूत्वावमन्त्रास्तैः। 'क'

इनेन रहिता गाढदिग्धूमतमसावृता ।
अयोध्या द्यौरिवास्फारा प्रपेदे भरतेन्दुना ॥४५॥

इनेनेति । भरत एव इन्दुस्तेन भरतेन्दुना इनेन स्वामिना रहिता गाढं निविडं दिग्धूम एव तमः[1] तेन आवृता अन्यत्र दिग्धूमसदृशतमसा अतएव अस्फारा अप्रकाशमाना द्यौरिव स्थिता अयोध्या प्रपेदे ॥४५॥

द्वाभ्याम् अयोध्यां वर्णयति—

विवारहाहारवाविवादमाननमा दवा ।
रमारतातारमारहानतातंततानहा ॥४६॥

*विवारहाहारवाविवादमाननमा* । *दवा* ।
*रमारता* । *अतारमारहानताततता* । *अनहा* ।

(सर्वतोभद्रबन्धः)

दाभ्याम् अयोध्यां वर्णयति —

**विवारेत्यादिना** । वियतः वारो निवारणं येषां ते विवाराः ते च ते [हा] हारवा हाहाकाराः तान् अवन्ति पुष्णन्ति कुर्वन्तीति हाहारवाविनः जनाः तेषां वादाः श्लोकवाक्यानि तेषां मानः प्रमाणमिति भार इति यावत् तेन नमन्तीति नमा, अत एव [दुन्वन्तीति दवा][2] दवन्तिर्थ्यः····[?] अतएव रमायामरता अवमता [?][3] अलक्ष्मिकेत्यर्थः [[4]अतारमारहानम् अतारे तरण-रहिते तरितुमशक्ये, मारहानं मरणहानिः यस्य स तथोक्तः । स चासौ तातः दशरथस्तस्य नता व्याप्ता अत्र हानिशब्देन पुत्रविवासादिकं विवक्षित-मिति न पौनरुक्त्यम् । अनहा नह्यति सन्नह्यतीति नहा सा न भवतीत्यनहा-

---

१—मतः, 'क'

२—दुनोतीति, 'क'

३—अवनिता, 'क'

४—'अतारहानमा तातं तेनामारहानं मरणहानी अतारे तरणरहिते तरितुमशक्ये मानहाने यस्य स तथोक्तः स चासौ तातो दशस्तिनतं ता व्याप्ता अत्र हानि-शब्देन पुत्रविवासादिकं विवक्षितमिति न पौनरुक्त्यम् अनहानह्यति सन्न-ह्यतीति न हा सा न भवतीत्यनहा सन्नाहरहितेत्यर्थः । 'इति मातृकापाठः'

सन्नाहरहितेत्यर्थः] । ईदृग्विधा अयोध्या प्रपेदे इति पूर्वेणान्वयः । अत्र वदनह-[शब्दौ पचाद्यजन्तौ][1] । सर्वतोभद्रबन्धः, तदुद्धारप्रकारस्तु चतुरङ्गपालिं लिखित्वा चतसृषु विधिषु पादचतुष्टयं क्रमेण लिखेत् अवशिष्टासु चतसृषु तु नख[ा]रा(रो)ह[2] क्रमेण पादचतुष्टयं लिखेत् एवं लेखने सर्वतोभद्रभ्रमणं भवतीति संक्षेपः ।।४६।।

**सा रागाददगा रासा राजिताहि[हि]ताजिरा ।**
**राका वाशशवाकारा राजिकागगकाजिरा ।।४७।।**

*सा । रागाददगा । रासा । अराजिता । अ[हि] हिताजिरा ।*
*राका । वा । अशशवाकारा । अराजिका । अगगकाजिरा ।।*

सेति । सा प्रसिद्धरागेण अदन्ति भुञ्जत इति रागादन्ति तानि च तान् अगाराणि च अगारशब्देन तन्निष्ठा जना लक्ष्यन्ते तानि अस्यति क्षिपतीति रागाददगारासा रामविवासदुःखेन भुञ्जानान् निषेधन्तीत्यर्थः । राजिताश्च अहयश्च सर्पास्तेषां हितानि इष्टानि अजिराणि गृहाङ्गणानि यस्यां सा तथोक्ता गृहाङ्गणेषु सर्पास्सञ्चरन्तीति भावः । अराजका राजरहिता अतएव शशंशंस-तीति [?] शशवः चन्द्रः तस्य आकारः शशवाकारः स न विद्यते यस्यां सा अशशवाकारा राका वा राकेव चन्द्रहीना पौर्णमासीव स्थितेत्यर्थः । अगा वृक्षास्तान् गच्छतीत्यगगका जिरागषज्ञरा [?] यस्यां सा तथोक्ता, अराजिके वृक्षाणामपि गषज्ञ[जि]राः[?] भवन्तीति भावः । एतादृशी प्रपेद इति पूर्वेणान्वयः । अर्धपादप्रतिलोमम् ।।४७।।

**वनान्तरं गतं रामं पितरं भुवनान्तरम् ।**
**घनात्यये चातकवदाकर्ण्य भरतोऽखिदत् ।४८।।**

वनान्तरमिति । भरतः वनान्तरं गतं रामं भुवनान्तरं गतं पितरं चाकर्ण्य घनात्यये मेघात्यये चातकवत् अखिदत् जीर्णवान् [खेदं प्राप्तवा-नित्यर्थः ?] पुषादित्वादङ् ।।४८।।

---

१—वदनहशब्दा पयाघचं तौ, 'क'

२—सुनरवराह, 'क'

**तते तातेऽतीततते तातताततेति तुत्ततिम् ।**
**ततोऽतत्त ततैतत्ते ततातत्तातिते ततः ।।४९।।**

*तते । ताते । अतीततते । तात । तात । इति । तुत्ततिम् ।*
*ततः अतत्त । ततैतत्ते । तता तत्तातिते । ततः ।।*

(एकाक्षरी)

**तत इति** । ताते दशरथे, अतीतता अतीतत्वं मरणम् अतीत प्राप्नोत । व्यतीतताते सति 'अतातत्यगमनम्' इत्यस्मात् पचाद्यच् । अतत्त ततैतत्ते न विद्यते तत्त तत्त नाद्यानुकरणशब्दविशेषो यस्मिन् तत्तथोक्तं तस्मिन् ततातत्तातिते, ततं वीणावाद्यं तस्य अतत्ता अपूर्वावस्था ताम् अतीतं प्राप्तं तत्तथोक्तं तस्मिन् तस्मिन् तते विस्मृते ततः तस्मिन् अयोध्यानगरे सार्वविभक्तिकस्तसि[ल्]प्रत्ययः । तातताततितुत्तिं हि हे पितः हेपित इति[?][1] व्यथापरम्परा । तु शब्दो भावेक्विबन्तः । तुद् व्यथन इति धातोरुत्पन्नः । तातः कृतवान् । कर्तरि क्तः । भरत इति शेषः । एकाक्षरी ।।४९।।

**गुर्वाज्ञया पितुस्तस्मिन् कुर्वाणे पारलौकिकम् ।**
**मन्थरादीन् स क्रिक्रुद्धश्शत्रुघ्नहरिरैक्षत ।।५०।।**

**गुर्विति** । तस्मिन् भरते गुर्वाज्ञया वसिष्ठाज्ञया पितुः पारलौकिकं परलोकसाधनं कर्म कुर्वाणे सति शत्रुघ्न एव हरिः सिंहः क्रुद्धः सन् मन्थरादीन् [जनान्][2] ऐक्षत दृष्टवान् ।।५०।।

**करेणालम्ब्य शिरसि गलत्पुष्पं चलद्रजः ।**
**विचकर्ष रुषा दासीं वल्लरीमिव वारणः ।।५१।।**

**करेणेति** । स शत्रुघ्नः दासीं मन्थरां वल्लरीं लतां वारणः गज इव करेण नि[ज]हस्तेन तुण्डेन च शिरसि केशेषु शिरोभागे च आलम्ब्य गृहीत्वा गलत्पुष्पं स्रस्तकुसुमं चलद्रजः चलत् रजः भूरजः पुष्परजश्च यस्मिन् कर्मणि तत्पुरुषो रोषेण विचकर्ष आकृष्टवान् ।।५१।।

---

१—हपित हेपितरेति, 'क'
२—मन्थरेव शुक्तितां, 'क'

**तं वारयित्वा भरतो रामं नेतुमनाः पुरीम् ।**
**ययावनीतिमार्गेण नीतिमार्गेण चाटवीम् ॥५२॥**

तमिति । भरतः तं शत्रुघ्नं वारयित्वा रामं पुरीं नेतुमनाः प्रापयितुमनाः अनीतिमार्गेण नीतिमार्गे[ण] च अटवीं ययौ । अनीतिमार्गेण नीतिमार्गेण चेत्यत्र शब्दतो विरोधः प्रतीयते [नार्थतः इति] विरोधाभासोऽलङ्कारः ॥५२॥

**चञ्चलासिलताचापशरजालोज्ज्वला चमूः ।**
**पर्जन्यमिव गर्जन्ती मेघमाला तमन्वगात् ॥५३॥**

चञ्चलेति । चञ्चलाभिः लोलाभिः असिलताभिश्च चापैश्च शरजालैश्च उज्ज्वला अन्यत्र असिलता इव चञ्चलाः विद्युतः चञ्चलासिलताः ताभिश्च चापेन इन्द्रचापेन च शरजालैः जलधाराभिश्च उज्ज्वला गर्जेति कोलाहलं कुर्वन्ती अन्यत्र गर्जितानि कुर्वन्ती चमूः तं भरतं मेघमाला पर्जन्यं वरुणमिव अन्वगात् अनुसृतवती । 'इणो गालुङ्गि'[1]ति गादेशः ॥५३॥

**हयेनलालानयेह येनगा ननगा नय ।**
**नगानिजाजा निगानला नजागगजानला ॥५४॥**

*हयेनलालानया । इह । या इनगा । ननगा । नय ।*
*नगानिजा । अजा । निगानला । नजागगजानला ॥*

**(सर्वतोभद्रबन्धः)**

एकेन श्लोकेन सेनामेव वर्णयति—**हयेनेति** । इह भुवि हयानाम् इनाः हयेनाः उत्तमाश्वाः तेषां लाला जिह्वाजलं तं नयति प्रापयति हयेनलालानया भूपतितलालायुक्तोत्तमाश्वा इत्यर्थः । इनगा स्वाभिमाना धावन्तीत्यर्थः । नये नीतौ ननगा न न गच्छन्तीति न, किन्तु गच्छन्त्येवेत्यर्थः । नीतिमार्ग एव गच्छन्तीत्यर्थः । नगानां मार्गस्य वृक्षाणाम् अनिजा अस्वकीया विरोधिनो वृक्षान् भञ्जनेति यावत् अजा अनादिमूलबलात्मिकेत्यर्थः । निगानलानजा नितरां गानं तस्य लानम् आदानं तदाकारः तेन जा[य]ते प्रादुर्भवतीति

---

१—अष्टाध्यायी २।४।४५

फा०—७

निगानलानजा भरतगुणान् गायन्तीत्यर्थः । अगगजानला अगाः पर्वताः तत्सदृशा गजास्त एव अनला यस्यां सा तथोक्ता ये। दारुणत्वेन गजानामनलसाम्यं बोध्यम् । या सेना अन्वगादिति पूर्वेणान्वयः सर्वतोभद्रबन्धोद्धारप्रकारस्तु पूर्वमेवोक्तः ।।५४।।

**पृतना वासवी वासीदुच्चैरावणवारणा ।**
**गुहेन लालिता गङ्गाकूले सा भारती चमूः ।।५५।।**

**पृतनेति** । उच्चैरावयन्ति ध्वनयन्तीति उच्चैरावणाः वारणाः गजा यस्यां सा तथोक्ता। अन्यत्र उच्चैः उन्नतः ऐरावणवारणो ऐरावताख्यगजो यस्यां सा, तथोक्ता भारती भरतसम्बन्धिनी सा चमूः वासवी इन्द्रसम्बन्धिनी पृतनेव सेनेव गङ्गाकूले जाह्नवीतटे अन्यत्र मन्दाकिनीतीरे गुहेन गुहनामकेन निषादाधिपतिना अन्यत्र कुमारस्वामिना लालिता आसीत् ।।५५।।

**सहायशस्तूलजालैः कैकेय्याः शिविरे कुटीं[1] ।**
**चित्रं तरन्ती सा गङ्गां दीपयामास वाहिनी ।।५६।।**

**सहेति** । गङ्गां तरन्ती सा वाहिनी चमूः नदी चेति व्यज्यते । शिविरे सेनानिवेशे कुटीं कुटी वाणी कुटी[?]कुटिलावाणीं [तां]कैकेय्या अयशस्तूलजालैः अपकीर्तितूलसंघैः सह दीपयामास ददाह । चित्रम् आश्चर्यं वाहिन्याः दाहकत्व-मिदमाश्चर्यकरमिति भावः । भरतस्य रामं प्रत्यभिगमनेनैव कैकेय्यपकीर्तिरपि अपगतेति भावः । उत्तरत्र कुशलसिद्ध्यर्थं सैनिकाः सेनानिवेशं दहन्तीति किंवदन्ति ।।५६।।

**प्रयागं प्राप्य कामैः स्वैर्मुनिना तर्पितान्यथ ।**
**बलान्यपि बलान्यापुर्भारतानि सुदासुना ।।५७।।**

**प्रयागमिति** । अथ अनन्तरं भारतानि भरतसम्बन्धिनी बलान्यपि सैन्यान्यपि प्रयागं प्राप्य सुदासुना दानशीलेन मुनिना भरद्वाजेन स्वैः स्वकीयैः

---

१—कुटी, 'क'

[कामैः] मनोरथैः तर्पितानि तृप्तिं प्रापितानि सन्ति [बलाः]?बलानि सत्वानि आपुः । बलानामपि बलप्राप्तिराश्चर्यकरीत्यपिशब्देनैव द्योतते ।।५७।।

**तीर्त्वा कलिन्दजां वीतलाघवाश्रममापगाम् ।**
**तदादिष्टां ततः सेना राघवाश्रममाप गाम् ।।५८।।**

*वीतलाघवा । अश्रमम् । आपगाम् । राघवाश्रमम् । आप । गाम् ।*

**तीर्त्वेति** । ततोऽन्तरं वीतलाघवं यस्याः सा तथोक्ता भरद्वाजाद्गौरवप्राप्तिरिति भावः । सेना भरतसेना कलिन्दजामापगां नदीं यमुनामश्रमं श्रमरहितं यथा तथा तीर्त्वा तेन भरद्वाजेन आदिष्टां कथितां राघवस्य रामस्याश्रमम् आश्रमभूतां गां भूमिमाप प्राप । पादयमकम् ।।५८।।

**पस्पन्दे भरते साराद्ववन्दे रघुनन्दनः ।**
**निनिन्दे बहुधा माता ननन्दे हृदि साधुना ।।५९।।**

**पस्पन्दे [इ]ति** । साधुना भरतेन कर्त्रा आरात् समीपं पस्पन्दे प्रचले स्पन्देर्भावे लिट् । रघुनन्दनो ववन्दे वन्दितः । वन्देः कर्मणि लिट् । बहुधा बहुभिः प्रकारैर्माता कैकेयी निनिन्दे निन्दिता । हृदि हृदये ननन्दे नन्दितं रामचन्द्रपादारविन्दसन्दर्शनादिति[1] भावः ।।५९।।

**वाराचक्रे पितुर्धीमानिवापन्नयनाटिना ।**
**अथ रामो नदीवारा नीवापन्नयनाटिना ।।६०।।**

*वारा । चक्रे । पितुः । धीमान् । इव । आपन्नयनाटिना ।*
*रामः । नदीवारा । नीवापम् । नयनाटिना ।।*

**वारेति** । अथानन्तरं धीमान्रामः आपन्नयम् आपत्कालनीतिं नाटयतीति आपन्नयनाटितेन नयनाटितानि नयनाभ्याम् अटति स्रवतीति नयनाटितेन हि नयन[वा]रा जलेन अश्रुजलेन नदीवारा[2] मन्दाकिनीजलेनेव पितुः दशरथस्य नीवापं तर्पणं चक्रे । पित्रादिमरणकाले अश्रुमोचनस्य कर्तव्यत्वेन विधानात्, तेन पितरिति ।।६० ।

---

१—सन्दर्शनाद्धि, 'क'

२—नदीवारे, 'क'

ननाम स महारामं राज्यदित्सुर्हिरन्धरम् ।
न नाम समहाः रामं लेभे लोभोऽपि किञ्चन ॥६१॥

*ननाम । सः । महारामम् । न । नाम । समहाः । रामम् ।*
*लेभे । लोभः । अपि । किञ्चन ॥*

**[ननामेति ।]** स तेजस्कः सः महीधरो भरतः राज्यं दित्सुः दातुमिच्छुस्सन् स निमीमे......[?] इसादेशः महानाम् उत्सवानामारामं निधिभूतं ननाम नतवान् । लोभः राज्यलोभः रामं किञ्चनापि किञ्चिदपि न लेभे । नामशब्दो वाक्यालङ्कारे......[?] भरतेन दीयमानं राज्यं रामो न स्वीकृतवानित्यर्थः । पादयमकम् ॥६१॥

नाचकांक्षि महीं रामः प्रार्थितो बहुधामुना ।
नियोगं गुरुणा दत्तं गुरवो न त्यजन्ति हि ॥६२॥

**नेति ।** रामः अमुना भरतेन बहुप्रकारैः प्रार्थितः सन् महीं भूमिं नाचकांक्षे न कांक्षितवान् । तथाहि गुरवो महान्तः गुरुणा पित्रादिना देशिकेन दत्तं नियोगमाज्ञां न त्यजन्ति किन्तु परिपालयन्त्येवेति भावः । अत्र प्रभाकर-मतानुसारिणो गुरुणा प्रभाकरेण दत्तं प्रतिपादितं नियोगमाज्ञां न त्यजन्ति किन्तु परिपालयन्त्येवेति भावः । अत्र गुरवः प्रभाकरमतानुसारिणो गुरुणा प्रभाकरेण दत्तं प्रतिपादितं नियोगं वाक्यार्थभूतमपूर्वं न त्यजन्तीति च व्यज्यते । अर्थान्तरन्यासोऽलङ्कारः ॥६२॥

निदधे भूभरं सद्यः स निजे पादुकायुगे ।
यस्य भूपकिरीटानि भूषयन्ति रजोभराः ॥६३॥

**निदध इति ।** सः रामः सद्यः निजपादुकायुगे भूभरं भूभारं निदधे निहितवान् । पादुकायुगमेव भूपालीकृतवानित्यर्थः । ननु रामपादुकायुगस्य भूपरिपालनसामर्थ्यं कुत इत्याशङ्क्याह । यस्येति । यस्य पादुकायुगस्य रजोभराः रेणुनिचयाः भूपकिरीटान् राजमौलीन् भूषयन्ति अलङ्कुर्वन्ति अतस्तस्य तत्सामर्थ्यम् । किंवात्राश्चर्यमिति भावः ॥६३॥

हरिदन्तरदन्तीन्द्र दन्तसन्ततिदन्तुरम् ।
रामचन्द्रयशोजालं विशालं यद्दधाविव ।।६४।।

पादुकायुगमेव श्लोकत्रयेण वर्णयति—

**हरिदन्तेति** । हरिदन्तरेषु दिगन्तरेषु दन्तीन्द्राः गजश्रेष्ठाः तेषां दन्तानां दन्तशकलानां सन्तत्या पङ्क्त्या दन्तुरं उन्नतोन्नतं खचितमित्यर्थः । यत्पादुकायुगं विशालं रामचन्द्रयशोजालं दधाविवेत्युत्प्रेक्षा । पादुकायुगस्य दिग्गजदन्तकलितत्वेन वस्तुना सकलदिग्विजयसामर्थ्यं वस्तु व्यज्यते इति वस्तुध्वनिः ।।६४।।

यच्चारुशिखरस्फारहीरोदारमरीचिभिः ।
फणागणभृतक्षोणीं जहासेवाहिवल्लभम् । ६५।।

**यदिति** । यत्पादुकायुगं चारुणोः शिखरयोः स्फाराणां प्रकाशमानानां हीराणां वज्राणाम् उदाराभिः मरीचिभिः कान्तिभिः हेतुभिः फणागणेन भोगसहस्रेण भृता क्षोणीर्यस्य स तथोक्तः तम् अहिवल्लभं शेषं जहासेवे-त्युत्प्रेक्षा। त्वया फणसहस्रेण भृता भूमिः मया शिखरद्वयेनैव भृतेति शेषं जहासेवेत्यर्थः । ।।६५।।

शिखरोपरि कीर्णाभिर्यदिन्द्रोपलकान्तिभिः ।
भृत्वा विश्वम्भराभारं बभारेवाम्बरस्थलम् ।।६६।।

**शिखर इति** । यत्पादुकायुगं शिखरयोरुपरि कीर्णाभिः व्याप्ताभिः इन्द्रोपलकान्तिभिः इन्द्रनीलमणिकान्तिभिः हेतुभिः विश्वम्भराभरं भूभारं भृत्वा अम्बरस्थलं गगनस्थलं बभारेवेत्युत्प्रेक्षा । अनेन रामपादुकायुग्मस्य सकललोकभरणसामर्थ्यं व्यज्यते । इत्यलङ्कारेण वस्तुध्वनिः ।।६६।।

निधाय भरतो मूर्ध्नि नन्दिग्राममुपाययौ ।
मुदा तत्पादुकाद्वन्द्वं नन्दिग्रामकृतस्तवम् ।।६७।।

निधायेति । भरतः नन्दिग्रामैः मागधसमूहैः कृतस्तवो यस्य स तथोक्तं पादुकाद्वन्द्वं मुदा सन्तोषेण मूर्ध्नि निधाय नन्दिग्राममुपाययौ उपागतः ।।६७।।

**जानाना जननी नाना निजाजनि जनी जनौ ।**
**रिपुरैपे परापारे पौरपूरपुरे पुरा ।।६८।।**

*जानाना । जननी । नाना । निजा । अजनि । जनी । जनौ ।*
*रिपुरैपे । परा । अपारे । पौरपूरपुरे । पुरा ।।*

**(चतुरक्षरी)**

**जानानेति** । निजा स्वकीया परा उत्कृष्टा, जानाना विवेकसम्पन्ना, नाना अनेका, जननी जनन्यः जातावेकवचनम् । पुरा पूर्वम् रिपुरैपे रिपूणां रायं धनं पिबतीति रिपुरैपस्तस्मिन् । जननीनां स्त्रीणां जनावुत्पत्तिस्थाने अपारे विस्तीर्णे पौरे नागरजनैः पूर्यत इति पौरपूरं तस्मिन् पुरे अयोध्यायाम् अजनि जाता स्थितेत्यर्थः । जननीवर्गस्याकूतैः........[?] स्थित इति भावः । जनेः कर्तरि णिच् । चतुरक्षरी ।।६८।।

**रामोऽपि विहरन्नद्रौ काञ्चनागमदारुणे ।**
**मेराविव मुदं पूषा काञ्चनागमदारुणे ।।६९।।**

*काञ्चन*[1] *। अगमत् । आरुणे । काञ्चनागमदारुणे ।*

**राम इति** । रामोऽपि काञ्चनवृक्षैः दारुणे भीषणे आरुणे गैरिकादि-धातुभिस्समन्ताद्रक्तवर्णे अद्रौ चित्रकूटमेरौ पूषेव सूर्य इव विहरन् काञ्चन कामपि अनिर्वाच्यां मुदम् अगमत् प्राप्तः गमेर्लुङ् ।।६९।।

**स्तनकोकस्पृशं पत्न्याः काकं पाकारिजं विभुः ।**
**तृणकोणेन बाणेन काणीचक्रे तृणाद्द्विजम् ।।७०।।**

**स्तनेति** । विभुः रामपत्न्याः सीतायाः स्तनकोकौ स्पृशतीति स्तन कोकस्पृक् तं पाकारिजं इन्द्रोत्पन्नं काकं नाम द्विजं पक्षिणं ब्राह्मणमिति

---

१—अकाञ्चन, 'क'

च गम्यते तृणकोणेन तृणाग्रेण बाणेन ऐषिकास्त्रेणेत्यर्थः । क्षणात् काणीचक्रे । अक्षिहीनी कृतवानित्यर्थः । राजापराधिनो द्विजस्य नेत्रदण्डनौचित्यादिति भावः ।।७०।।

**अथ सन्त्यज्य तं रामः सिषेवे तापहारिणम् ।**
**सुधांशुजननस्थाननयनं मुनिपुङ्गवम् ।।७१।।**

[अथेति ।] अथ रामः चित्रकूटं सन्त्यज्य सुधांशोः चन्द्रस्य जननस्थानं उत्पत्तिस्थानं नयनं यस्य तं तथोक्तम् अतएव तापहारिणं मुनिपुङ्गवं मुनिश्रेष्ठम् अत्रिमित्यर्थः । सिषेवे सेवितवान् ।।७१।।

**रामं सहर्षं क्षमया विधूतस्थिरानसूया रचिताङ्गरागा ।**
**सन्ध्यारुणी द्यौरिव मैथिली सा स्थिरानसूया रचिताङ्गरागा ।।७२।।**

*विधूतस्थिरा । अनसूया । आर । चिताङ्गरागा ।*
*स्थिरा । अनसूया रचिताङ्गरागा ।*

रामगिति । क्षमया शान्त्या विधूता तिरस्कृता स्थिरा भूमिः यया सा विधूतस्थिरा, अनसूया असूयारहिता सा मैथिली सीता स्थिरः अनुसूयया अत्रिपत्न्या रचितः अङ्गरागः कुङ्कुमादिगन्धानुलेपनं यस्यास्सा, तथोक्ता सती अतएव सन्ध्यया अरुणा रक्तवर्णा द्यौरिव स्थिता सती चितः उपचितः वर्धितः इति यावत् । अङ्गे शरीरे रागः अनुरागो यया सा तथोक्ता सती सहर्षं रामम् आर प्राप्तवती । अनसूया गृहादिति भावः ।।७२।।

**संहर्तुमुद्यम्य स राक्षसालिं भयानकोद्यद्भुजदण्डकायाम् ।**
**अखण्डकोदण्डकलाप्रचण्डो विहारमाकांक्षत दण्डकायाम् ।।७३।।**

संहर्तुमिति । अखण्डायां कोदण्डकलायां धनुर्विद्यायां प्रचण्डः प्रवीणः सः रामः भयानकाः उद्यन्तः विलसन्तः भुजदण्डाश्च कायाः शरीराणि च यस्यास्सा तथोक्ता तां राक्षसानामालिं पङ्क्तिं संहर्तुमुद्यम्य उद्युज्य दण्डकायां दण्डकावने विहारं सञ्चारकेलिम् आकांक्षत कांक्षितवान् ।।७३।।

**वीरलक्ष्मीसखाथो तृतीयः स्वयम् रक्षसां कारणं खेचराकारणम् ।**
**चण्डतेजा इव व्योम रामोऽविशच्चण्डघूकाननं दण्डकाकाननम् ।।७४।।**

**इति श्रीचरकूरिकोण्डुभट्टोपाध्यायपौत्रेण यज्ञनारायणभट्टतनयेन वेङ्कटेश्वरेण सर्वाम्बिकागर्भशुक्तिमुक्तामणिना विरचिते चित्रबन्धरामायणे महाकाव्ये अयोध्याकाण्डकथा सम्पूर्णा द्वितीयः सर्गः ।।**

**वीरेति** । अथ अनन्तरं वीरलक्ष्म्याः सखा वीरलक्ष्मीसखः वीरलक्ष्मीसहित इत्यर्थः । स्वयं तृतीयः ससीतालक्ष्मण इत्यर्थः । रामः राक्षसां विराधादिराक्षसानां कारणं निधानं खेचरान् पक्षिणः आकारयन्तीति [तं] खेचराकारणं जटायुमुख्यविहगाक्रान्तमित्यर्थः । चण्डानि [भ]यदाकारभयङ्कराणि घूकानामाननानि मुखानि यस्मिन् तत्तथोक्तं दण्डकाकाननं चण्डतेजः उष्णरश्मिः व्योमाकाशमिव अविशत् प्रविष्टवान् ।।७४।।

**इति श्रीचरकूरियज्ञनारायणभट्टविरचितायां चित्रबन्धरामायणव्याख्यायां**
**द्वितीयः सर्गः ।**

## तृतीयः सर्गः

अथ रामो ददर्शाधिस्वान्ताभं तमसाकुलम् ।
परभूदारनिरतं हरिद्वेषपरायणम् ॥१॥

**अथेति** । अथ अनन्तरं रामः तमसाकुलम् अतएव अघिनः पापिनो जनस्य स्वान्ताभं चेतोनिभम् अतएव परभूदारनिरतं परेषां भूदारेषु क्षेत्र-कलत्रेषु निरतमासक्तं परभूदारनिरतं काननमिति विशेष्यमुत्तरत्र वक्ष्यते । [1][परा श्रेष्ठा भुवं दारयन्तीति भूदारवराहाः तैर्निरन्तरसम्पूर्णम्, अन्यत्र हरिद्वेषपरायणं हरिद्वेषाः वा[रा]हद्विषन्तः महिषा इत्यर्थः । तेषां परायणं मुख्यस्थानं] ददर्श दृष्टवान् ॥१॥

कालेकाले लोलकालिकोलीकलकलाकुलम् ।
लोकालीकं कोकिलाली काकलीकुलकैः कलम् ॥२॥

*काले । काले । लोलकालिकोलीकलकलाकुलम् ।*
*लोकालीकम् । कोकिलाली काकलीकुलकैः । कलम् ॥*

(द्व्यक्षरी)

---

१—एतत्स्थलं द्वितीयसर्गे त्रिसप्ततितमस्य श्लोकस्य टीकायां मातृकायाम् अव्यवस्थया मिलति । तत एव गृहीत्वा व्यवस्थितः ।

**काल इति ।** काले काले प्रतिकालं, लोलानां चञ्चलानां कालिनां नीलवर्णानां कोलिनां वाराहिणां कलकलैः आकुलम् लोकानामलीकमप्रियं कोकिलानां पिकपङ्क्तीनां काकलीकुलकैः काकली स्वरसमूहैः कलम् अव्यक्त-मधुरम् । द्व्यक्षरी ।।२।।

**नानोकः केकिकोकानां नैककाकानकैः कनम् ।**
**नाकिनां नानकं[1] नैकं कनकाकानि काननम् ।।३।।**

*नानोकः । केकिकोकानाम् । नैककाकानकैः कनम् ।*
*नाकिनाम् । नानकम् । नैकम् । कनकाकानि । काननम् ।।*

**नानेति ।** केकीनां कोकानां च अनोको न अस्था[न]न्तु न किन्तु स्थानमेवेत्यर्थः । नैके बहवः ते च ते काकाश्च अतएव आनका वाद्यविशेषाः तैः कनं शोभितं नाकिनां देवानाम् अ[न]कम् अदुःखकरं न किन्तु दुःखकर-मेवेत्यर्थः । वैद्यकसाधारणं कनकैः धुतूरैः आसमन्तात् कनति शोभत इति कनकाकानि काननं ददर्शेति पूर्वेणान्वयः । [उ]त्प्रेक्षते ।।३।।

**तत्र सीतां समालोक्य मायामिव विमोहिनीम् ।**
**आयान्विराधः सम्मूढः स्वगतं प्रत्यभाषत ।।४।।**

**तत्रेति ।** तत्र दण्डकारण्ये आयान् आगच्छन् सम्मूढः विराधः माया-मिव विमोहिनीं मोहयन्तीं सीतां समालोक्य स्वगतं प्रत्यभाषत स्वयं स्वं प्रत्यवददित्यर्थः ।।४।।

**मोमामामामिमामामामिमौ मा मममा मम ।**
**मा ममौ मा ममौ मा मे मामा मामममुमामुमुत् ।।५।।**

*मोमामामाम् । इमाम् । आमाम् । इमौ । मा मममा मम ।*
*मा । ममौ । मा । ममौ । मा । मे । मा । अमा । माम् । अमुम् । आमुमुत् ।*

**(एकाक्षरी)**

---

**१—नानके, 'क'**

वचनरीतिमेवाह—

भेति । मोमामामां मा लक्ष्मीः उमा पार्वती तयोः अमा अपरिमाणा मा कान्तिरिव कान्तिर्यस्यास्सा तथोक्ता, ताम् इमां स्त्रियम्, आमाम् अध्यगच्छं दृष्टवानहमित्यर्थः । मातेर्भाविलङ्[1] । इमौ रामलक्ष्मणौ मामा-माभूतामित्यर्थः । अस्यां नीराजो भवतामित्यर्थः मम मे ममभा मनुतां बुद्धिः [व्य]ज्यते [इ]ति शेषः । तस्यामितिभावः । मे मम, मा लक्ष्मीः भाग्यमिति यावत् । माममौमाममो अपरिमिता अपरिमितेत्यर्थः । सम्भ्रमवशाद् द्विरुक्तिः । मे मम अमा अलक्ष्मीः अमा मास्त्रीत्यर्थः । अस्याः प्राप्त्या लक्ष्मीरपि निवर्तत इत्यर्थः । अत एव अमुं माम् अमुमुत् नूतनसन्तोषः प्राप्नोतीति शेषः । एकाक्षरी । पूर्वत्र अमेत्यत्र माशब्दः परिमावाचको[2] भावे क्विबन्तः ।।५।।

**इत्युक्त्वा मैथिलीहेतोर्हत्वा धावन्तमाशु सः ।**
**सुरानाराधयामास विराधमपराधिनम् ।।६।।**

**इतीति** । इति अनेन प्रकारेण उक्त्वा मैथिलीहेतोः सीतार्थम् आशु धावन्तम् अत एवापराधिनं विराधं हत्वा स रामः सुरानाराधयामास सन्तोषयामास । राध्यतेर्ण्यन्ताल्लिट् ।।६।।

**शरभङ्गविहीनोऽपि शरभङ्गमुपेत्य सः ।**
**अपि शान्तमनोवृत्तिः सुतीक्ष्णस्याश्रमं ययौ ।।७।।**

**शरभङ्गेति** । स रामः शराणां भङ्गेन विहीनो विरहितोऽपि शरभङ्गं बाणभङ्गमुपेत्य प्राप्य इति शब्दतो विरोधः । शरभङ्गनाममुनिं प्राप्येत्यर्थतः परिहारः । शान्ता मनोवृत्तिर्यस्य स तथोक्तः । तथापि सुतीक्ष्णस्य कोपन-शीलस्य आश्रमं ययाविति शब्दतो विरोधः । सुतीक्ष्णनाममुनेः आश्रमं ययावित्य[र्थ]तः परिहारः । विरोधाभासालङ्कारः ।।७।।

---

१– मातेर्भाषत लङ्, 'क'

२—परिमाकोवाचका 'क'

**श्रुत्वा पुण्यजनालापं दीनं राक्षसबाधया ।**
**हन्तुं पुण्यजनानेव प्रत्यजानीत राघवः ॥८॥**

**श्रुत्वेति ।** राघवः रामः राक्षसबाधया दीनं पुण्यजनानां सुकृतिजनानाम् ऋषीणामित्यर्थः । आलापम् आभाषणं श्रुत्वा पुण्यजनानेव सुकृतिजनानेव हन्तुं प्रत्यजानीतेति विरोधः । पुण्यजनान् यातुधानान् हन्तुं प्रत्यजानीत प्रतिज्ञातवानिति परिहारः । विरोधाभासोऽलङ्कारः ॥८॥

**ततो गत्वा सरः किञ्चिदमलाप्सरसाङ्गणम् ।**
**दधानं राघवोऽपश्यदमलाप्सरसाङ्गणम् ॥९॥**

**तत इति ।** तत अनन्तरं राघवः रामः अमलाभिर्मङ्गलाभिरद्भिर्जलैः सरसमार्द्रमङ्गणं पुरो देशो यस्य तं तथोक्तम् । अमराणां देवानाम् अप्सरसां च गणं दधानं किञ्चित्सरः पञ्चाप्सरो नाम सर इत्यर्थः । गत्वा अपश्यत् दृष्टवान् ॥९॥

**अगस्त्यभ्रातुरादेशादथ रामो ययौ क्रमात् ।**
**अवन्ध्याशीर्वचो वीचिं महर्षिं विन्ध्यमर्दनम् ॥१०॥**

**अगस्त्येति ।** अथ सरोदर्शनान्तरं रामः क्रमात् मार्गक्रमात् अगस्त्यभ्रातुरादेशात् अवन्ध्या अमोघा आशीर्वचसां वीचिः परम्परा यस्य स तथोक्तस्तं विन्ध्यमर्दनं विन्ध्याद्रिनियन्तारं महर्षिमगस्त्यमित्यर्थः ययौ प्राप यातेर्लिट् ॥१०॥

**जज्ञे वातापिना तृप्तो मुनिवातापिनाधिना ।**
**मानवातापिनापारकीर्तिवातापिनाम यः ॥११॥**

*जज्ञे वातापिना । तृप्तः । मुनिवातापिनाधिना ।*
*मानवातापिना । अपारकीर्तिवाता । अपि नाम । यः ।*

**अथ चतुर्भिः श्लोकैः** अगस्त्यं वर्णयति –

**जज्ञ इति**। अपार[ा]याः कीर्तेर्वाता वा गन्तावातेस्तृच् न च तृजकाभ्यां कर्तरीति षष्ठी समासनिषेधः। 'जनिकर्तुः प्रकृतिरितिज्ञापकात्तस्य निषेधस्यानित्यत्वात्। यो नामागस्त्यः नामशब्दो वाक्यालङ्कारे मुनीनां वातान् प्राणवायूना[पिब]तीति मुनिवातापिना मुनिप्राणहारिणेत्यर्थः। मानवान् आतापई[य]ति सन्तापयतीति मानवातापिना अतएव अधिना पापिनापि वातापिना वातापिनामकेन राक्षसेन तृप्तो जज्ञे जातः। वातापिनं भक्षितवानित्यर्थः। मध्ययमकम् ॥११॥

**घनसारमयेनासीत् साधुवृत्तेन दक्षिणा।**
**तिलकेनेव दिग्येन भूषिता विशदात्मना ॥१२॥**

**घनसारेति**। घनसारमयेन अधिकवलप्रचुरेण अन्यत्र कर्पूरमयेन साधुवृत्तं चरित्रं यस्य स तथोक्तः तेन। अन्यत्र साधु यथा तथा वृत्तेन वर्मलेन [?] विशदात्मना शुद्धान्तःकरणेन अन्यत्र शुभ्राकारेण येन अगस्त्येन तिलकेनेव दक्षिणादिग्विभूषिता आसीत् ।१२॥

**न केवलं पुराकांक्षि शङ्करोद्वाहमङ्गलम्।**
**कल्याणमपि लोकानां येन राक्षसभीभृताम् ॥१३॥**

**नेति**। येन अगस्त्येन पुरा पूर्वं शङ्करोद्वाहमङ्गलं ईश्वरविवाहमङ्गलं केवलं नाकांक्षे न कांक्षितम्। 'काङ्क्षतेः कर्मणिलुङ्'। किन्तु राक्षसेभ्यो भियं बिभ्रति राक्षसभीभृतः तेषां लोकानामपि कल्याणम् आकांक्षि ॥१३॥

**अमरन्दरसीद्यस्य सिन्धुर्हस्तारविन्दगः।**
**अलालासलिलीद्येन पीतोऽपि रसनाञ्चले ॥१४॥**

**अमरन्दरसीति**। सिन्धुः समुद्रः यस्य अगस्त्यस्य हन्तारविन्दगः पाणिपद्मगतः सन् अमरन्दरसीत् मरन्दरसइवाचारीत् मकरन्दवाचकान्मकरन्दशब्दात् क्विबन्ताल्लुङ्। येन अगस्त्येन पीतः सन् रसनाञ्चले जिह्वाग्रे अलालासलिलीद् लालासलिलमिव आचारीत्। अत्रापि पूर्ववदेव लालासलिलशब्दाल्लुङ् ॥१४॥

चक्रे पर्णकुटीं रामः पञ्चवट्यां तदाज्ञया ।
प्रतापाग्निरिवेहास्य वास्तुहोमानलो बभौ ॥१५॥

चक्र इति । रामः तस्यागस्त्यस्याज्ञया पञ्चवट्यां पर्णकुटीं पर्णशालां चक्रे कृतवान् । इह अस्यां पर्णशालायां वास्तुहोमस्य अनलो वह्निः अस्य रामस्य प्रतापग्निरिव बभौ भाति स्म ।।१५।।

निर्धूताखिलतापापो पापेहासहमानवः ।
नवेऽभूद्विहितारामो रामो गोदावरीतटे ॥१६॥

निर्धूतेति । निर्धूतः [:] अखिलानां जनानां तापः याभिस्ताः तथोक्ताः तादृश्यः आपो जलानि यस्य तत्तथोक्तं तस्मिन् । 'ऋत्वपूरब्धू[1]रित्यादिना अप्प्रत्ययः पापेहां इच्छां न सहन्त इति पापेहासहाः मानवाः यस्मिन् तत्तथोक्तः, तस्मिन् नवे अभिनवे गोदावर्यास्तटे रामः विहितः कृतः आरामः क्रीडा येन स तथोक्ता अभूत् ।।१६।।

तरङ्गकनिते सेभे रञ्जिते मदिराक्षसे ।
गतेऽतिलानं कैराते कमलाकरनन्दिनि ॥१७॥

(अर्धभ्रमकः)

तरङ्गेति । तरङ्गैर्गोदावरीवीचिभिः, कनिते शोभिते, सेभे सगजे, रञ्जिते प्रकाशिते मद एषामस्तीति मदिनो मत्ता, राक्षसा यस्मिन् तत्तथोक्तं तस्मिन् किरातसम्बन्धिनि कैराते, कमलाकरैः तटाकैः नन्दयतीति कमलाकरनन्दी तस्मिन्, गोदावरी तटे गतम् अतिलानं ग[त] इति भावः । स्वीकारो यस्मिन् कर्मणि तत्तथा रामः विहितारामोऽभूदिति पूर्वेणान्वयः । अर्धभ्रमकबन्धः । तदुद्धारप्रकारस्तु पञ्चतिर्यग्रेखाः लिखित्वा सम्पन्नासु चतसृषु विधिषु क्रमेण पादचतुष्टयं लिखेत् । एवं लेखने सति श्लोकप्रथमाक्षरमारभ्य विधिचतुष्टयं क्रमेण द्वितीयतृतीयचतुर्थपादाद्यक्षरेषु पतितेषु सत्सु प्रथमपादस्यार्धं भवतीति श्लोकान्त्यक्षरमारभ्य विधिचतुष्टयं क्रमेण द्वितीय-

---

१—'ऋक्पूरब्धूः पथामानक्षे' ।५।४।७४ (अष्टाध्यायी) ।

तृतीयप्रथमपादान्त्यक्षरेषु पतितेषु सत्सु अवशिष्टं प्रथमपादस्यार्धं भवति एवं द्वितीयादिपादत्रयमपि प्रथमपादवदेव योजनीयमिति संक्षेपः ॥१७॥

इतः परं षड्भिः श्लोकैः हेमन्तं वर्णयति—

**हिमरेखासितोष्णीषधारिभिस्तत्र भूधरैः ।**
**वृतो हेमन्तसमयः सामन्त इव सम्बभौ ॥१८॥**

हिमेति । तत्र पञ्चवट्यां हिमरेखा एव सितोष्णीषाणि तानि धारयन्तीति धारिणः तैः, अन्यत्र हिमरेखासदृशसितोष्णीषधारिभिः भूधरैः पर्वतैः, अन्यत्र राजभिः वृतः हेमन्तसमयः हेमन्तकालः सामन्त इव सम्बभौ संरेजे । भातेर्लिट् ॥१८॥

**हिमरक्षोहता वह्निं तदा कान्तारवासिनः ।**
**न केवलमकांक्षन्त रामतेजोऽनलं हि ते ॥१९॥**

हिमेति । तदा हेमन्तकाले कान्तारवासिनो वनवासिजनाः हिमेन च रक्षोभिश्च खरादिराक्षसैश्च हतास्सन्तः केवलं वह्निमेव नाकांक्षन्त न कांक्षितवन्तः किन्तु ते वनवासिनः रामस्य तेजोऽनलं प्रतापाग्निं चाकांक्षन्त । रामप्रतापाग्नेरपि रक्षः पीडानिवर्तकत्वादितिभावः ॥१९॥

**हरता पद्मिनीशोभां तुहिनेन तिरस्कृतः ।**
**नूनं दण्डधरं सद्यो मार्तण्डः शरणं ययौ ॥२०॥**

हरतेति । सद्यस्तस्मिन् काले मार्तण्डस्सूर्यः पद्मिनीशोभां नलिनीश्रियं हरता स्वपत्निसर्वस्वहरणं च व्यज्यते । तुहिनेन हिमेन तिरस्कृतः अभिभूतस्सन् दण्डधरं देवं यमं दण्डधारिणं राजानमिति च व्यज्यते । शरणं ययौ गतः नूनमित्युत्प्रेक्षा ॥२०॥

**द्रुमाश्चन्द्रकरव्रातविगलत्तुहिनोक्षिताः ।**
**अवर्षन् मिहिकाबिन्दून् मुक्ता इव सुरद्रुमाः ॥२१॥**

**द्रुमा इति** । द्रुमाः वृक्षाः चन्द्रस्य करव्रातेभ्यः किरणसमूहेभ्यः विगलद्भिः तुहिनैः हिमैः उक्षिताः सिक्तास्सन्तः मिहिकाविन्दून् हिमविन्दून् सुरद्रुमाः मुक्ता इव अवर्षन् वर्षन्ति स्म । वृषेर्लङ् ।।२१।।

**समावृतान्यरण्यानि तुहिनेन तदोषसि ।**
**सर्वङ्कषतरेणैव यशसा ताटकाद्विषः ।।२२।।**

**समावृतानीति** । तदा हेमन्तकाले उषसि प्रातः काले अरण्यानि वनानि तुहिनेन हिमेन ताटकाद्विषः रामस्य सर्वङ्कषतरेण यशसेव समावृतानि आच्छादितानि अभवन्निति शेषः ।।२२।।

**कासारकमलव्रातैर्निहते हिमवारिणा ।**
**ईषुर्युवानः कान्तानां वदनाम्बुजसौरभम् ।।२३।।**

**कासारेति** । हिमवारिणा हिमोदकेन कासारकमलव्रातैः सरः सम्बन्धि-पद्मसमूहैरिति [नि] हते सति युवानः तरुणपुरुषाः कान्तानां कामिनीनां वदना[ना]मम्बुजसौरभं मुखपद्मानां गन्ध्यम् ईषुः इष्टवन्तः । हेमन्तकाले सकल सरोरुहाणां विनाशात् तरूणीमुखपद्मानामेव अत्यन्तविकशितत्वात् यूनां च मदनोद्दीप्तिश्चेति भावः ।।२३।।

**हसन्तीव तदारामं हसन्ती रावणस्वसा ।**
**आससाद नवाकल्पमाणिक्याङ्गारपूरिता ।।२४।।**

**हसन्तीति** । तदा हेमन्तकाले हसन्ती हासं कुर्वन्ती नवेषु आकल्पेषु भूषणेषु माणिक्यानि अङ्गाराणि च तैः पूरिता रावणस्वसा शूर्पणखा नवा-कल्पमाणिक्यसदृशैरङ्गारैः पूरिता हसन्तीव अङ्गारशकटीव रामम् आससाद आसन्ना । शूर्पणखायाः कार्यगुणयोगेन हसन्ती साम्यमिति भावः ।।२४।।

**स्तनाग्रदामालङ्कारा नाराधिरतिकारिका ।**
**ग्रथिता भारीतिकालं दारभासुररीतिमा ।।२५।।**

*ग्रथिताभारीतिका । अलम् ।*

**(अर्धभ्रमकबन्धः)**

सप्तभिः श्लोकैः शूर्पणखामेव वर्णयति—

स्तनेति । स्तनयोरग्रे दामानि हारा विभूषणानि अलङ्कारा यस्यास्सा तथोक्ता । नरसम्बन्धिनी नारा सा च सा अधिकरतिश्च तस्याः कारिका कर्त्री मनुष्यरतिं कामयमानेत्यर्थः । अलमत्यर्थं ग्रथिता आभा यया सा तथोक्ता । अरीणां शत्रूणाम् ईतिका ईतिः बाधस्वरूपा च दाराणां भार्यायाः भासुरायाः रीतेः प्रकृतेः मेव मा श्रीरिव श्रीर्यस्यास्सा तथोक्ता भार्यावेषं धृत्वा समागतेत्यर्थः । अर्धभ्रमकवन्धः । वन्धोद्धारप्रकारस्तु प्रागेवोक्तः ॥२५॥

**नवस्मितरुचौ यस्या गण्डौ सपुलकाङ्कुरौ ।**
**शशङ्काते पुरस्सम्पदुत्सवाङ्कुरपालिके ॥२६॥**

नवेति । यस्याः शूर्पणखायाः या नवस्मितरुक् मन्दहासकान्तिर्ययोस्तौ तथोक्तौ गण्डौ कपोलौ सपुलकाङ्कुरौ पुलकाङ्कुरसहितौ, रामचन्द्रसौन्दर्य सन्दर्शन् कन्दलितकन्दर्पवशादिति भावः । [पुरः] पुरस्तात् सम्पदेव युद्धमेवोत्सवः विवाहोत्सवः तस्मिन् अङ्कुराणां पालिके अङ्कुरार्पणपात्रे इति शशङ्काते शङ्कितवानित्यर्थः । अङ्कुरार्पणपालिकानां नवतन्तुसमाक्रान्तत्वदोषप्ररोहप्रचुरत्वतोऽत्र गण्डोपमात्वमिति बोध्यम् ॥२६॥

**प्रसरन्नधरे यस्यास्ताम्बूलस्य बभौ रसः ।**
**उद्रेकाद् बहिरुद्गच्छन् रागो रघुपताविव ॥२७॥**

प्रसरन्निति । यस्याः शूर्पणखायाः अधरे प्रसरन् ताम्बूलस्य रसः उद्रेकाद्बहिरुद्गच्छन् रघुपतौ विषये राग इव बभौ ॥२७॥

**विरेजतुः कुचौ यस्याः पीनौ स्वेदकणाञ्चितौ ।**
**रामस्य जययात्रायै पूर्णकुम्भाविवागतौ ॥२८॥**

विरेजतुरिति । पीनौ पीवरौ यस्याः शूर्पणखायाः कुचौ स्वेदकणैः अञ्चितौ व्याप्तौ सञ्चितौ रामस्य जययात्रायै खरदूषणादिवधार्थं विजयदण्डयात्रायै आगतौ पूर्णकुम्भाविव विरेजतुः । प्रवसतः पुरुषस्य पूर्णकुम्भाभिगमः विजयहेतुरिति शकुनशास्त्रप्रसिद्धमिति बोध्यम् ॥२८॥

**यस्याः सम्भ्रमतो लोलं नासिकामणिकुण्डलम् ।**
**मत्वा भाव्याश्रयच्छेदं चकम्प इव भीतितः ॥२९॥**

**यस्या इति ।** यस्याः शूर्पणखायाः सम्भ्रमतः आगमनसम्भ्रमात् लोलं चञ्चलं नासिकामणिश्च कुण्डलञ्च नासिकामणिकुण्डलं द्वन्द्वैकिमद्भावः । भाविनं भविष्यन्तं आश्रयच्छेदं मत्वा भीतितः भयात् चकम्पे इव कम्पते स्मेवेत्युत्प्रेक्षा ॥२९॥

**अनर्थकारणं नीवी यस्या वभ्रंश बन्धनम् ।**
**साक्षात्कारेण रामस्य बन्धो हि परिमुच्यते ॥३०॥**

**अनर्थ इति ।** अनर्थकारणं खरादिबधहेतुः यस्याः शूर्पणखायाः नीवेर्बन्धनं बभ्रंश भ्रष्टम् । रामानुरागावेशवशादिति भावः । तथा हि रामस्य साक्षात्कारेण दुःखहेतुः बन्धः परिमुच्यते त्यज्यते । ईश्वरसाक्षात्कारस्य सकलबन्धनिवर्तकत्वादिति भावः ॥३०॥

**दृष्ट्वा रोमावली ताली यस्या नाभिसरस्तटे ।**
**वलीवृता स्तनफला हरिन्मणिरुचिच्छटा ॥३१॥**

**दृष्टेति ।** हारेषु हरिन्मणीनां गारुत्मतमणीनां रुचयः कान्तिः एव छटा वर्णानि यस्यास्सा तथोक्ता, स्तनावेव फले यस्यास्सा तथोक्ता, [वलिभिः रेखाभिः][1] वृता । इदं तालवृक्षपक्षेऽपि समानम् । यस्याः शूर्पणखायाः रोमावलिरेव ताली तालतता नाभिसरस्तटे दृष्टा अवलोकिता आविरभूदिति शेषः । सरस्तट इति च ध्वन्यते । लोके कामुकस्त्रियाः रोमावलिः स्पष्टं वीक्ष्यते एवेति भावः ॥३१॥

**तां ततः कृतदौर्जन्यां लक्ष्मणः खड्गलक्षणः ।**
**रन्ध्रावशेषितश्रोत्रनासामाशु व्यचीकरत् ॥३२॥**

---

१—वली धर्माधरेखाभिः, 'क'

**तामिति ।** ततः अनन्तरं रामः कृतं दौर्जन्यं मैथिलीतर्जनरूपं यया तां, तथोक्तां तां शूर्पणखां, खड्गलक्षणं खड्गचिह्नं लक्ष्मणं, खड्गधारिणा लक्ष्मणेनेत्यर्थः । 'हृक्रोरन्यतरस्यामिति'[1] द्विकर्मकत्वम् । रन्ध्रावशेषितं रन्ध्रमात्रावशेषितं श्रोत्रनासं कर्णनासं यस्यास्तां तत्तथोक्तां प्राण्यङ्गत्वादेकवद्भावः । आशु शीघ्रं व्यचीकरत् [छिन्नं] कारितवान् । करोतेर्णौ लुङ् । कर्णशष्कुलीनासिकाच्छेदः कारित इति भावः ।।३२।।

**चचाल सानिनादाथ चलितागमहीनदा ।**
**लताहराकारहीना सा गरालम्बिकामती ।।३३।।**

*चचाल । सानिनादा । अथ चलितागमहीनदा ।*
*लताहरा । आकारहीना । सा । गरालम्बिका । अमती ।*

(अर्धभ्रमकबन्धः)

**चचालेति** । अथानन्तरं सा शूर्पणखा, सानिनादा साधिकरवा चालिताः अगाश्च मही च नदाश्च यया सा तथोक्ता, हरतीति हरा, लतानां हरा उत्पाटितलतेत्यर्थः । आकारहीना विकृताकारा, अमतिने वेद्यते मतिर्यस्मिन् कर्मणि तद्यथा तथा, गरस्य विषस्य आलम्बिका चामती, असूयारूपं विषं हृदि दधाना सतीत्यर्थः । चचाल चलितवती । अर्धभ्रमकबन्धः । तदुद्धारप्रकारस्तु प्रागेवोक्तः ।।३३।।

**विश्रोत्रया वैश्रवण्या विग्रया व्यग्रया तया ।**
**खरसेना जगामाशु मृत्युदूत्येव चोदिता ।।३४।।**

**विश्रोत्रयेति ।** विश्रोत्रया विगतकर्णया विग्रया विगतनासिकया 'वेर्ग्रो वक्तव्य' इति विपूर्वस्य नासिका[या] ग्रादेशः । व्यग्रया त्वरयन्त्या, वैश्रवण्या विश्रवस्सुतया, तया शूर्पणखया खरसेना मृत्युदूत्येव चोदिता प्रेरिता सती आशु जगाम आगतवती ।।३४।।

---

१—अष्टाध्यायी १।४।५२

**उदारनानानाराचा दानवामतभीकरा ।**
**रवाढ्यमायायाभीना नाममानितयातना ॥३५॥**

*रवाढ्यमायाया । अभीना । नाम । मानितयातना ।*

(अर्धभ्रमकम्)

त्रिभिः श्लोकैः खरसेनामेव वर्णयति—

उदारेत्यादिना(ने)[ति।] उदाराः नानाविधा नाराचा बाणाः यस्यास्सा तथोक्ता, दानवामतानां भीकरा रवेण कोलाहलेन आढ्यां सम्पन्नां मायाम् आयते गच्छतीति मायायाः अयतेः पचाद्यच् प्रत्ययः । रवाढ्या च सा माया चेति विशेषणसमासः । न विद्यते भीः एषां ते अभियः, अभियः इनाः यस्याः सा अभीना निर्भीकस्वामिकेति यावत्, नामभिः मानिता वर्धिता यातनादिप्रवेदनाय या सा नामश्रवणेनैव परेषामतिवेदनादायिनीत्यर्थः । एवं विधात्मना जगामेति पूर्वेणान्वयः । अर्धभ्रमकम् ॥३५॥

**तारकानकसानादा लीना सा जगदायता ।**
**विदितासिलताहीना मायासाररसाहवा ॥३६॥**

(प्रतिलोमम्)

तारकेति । उच्चैः आनकैः पटहैः आनकः पटहो ढक्केत्यमरः । सानादा आनादसहिता सघोषेत्यर्थः, अलीना अपरिछिन्ना जगति भुवि आयातीति जगतायता यतेराङ् पूर्वत्वा[त्प]चाद्यच् । विदिताः प्रसिद्धाः असिलताः खड्गलताः ता एव अहीनाः सर्वश्रेष्ठाः यस्यां सा तथोक्ता । मायानां सारैः प्रसारैः रसयुक्ते आहवो युद्धं यस्यां सा मायासाररसाहवा, सा प्रसिद्धिं जगामेति पूर्वेणान्वयः । अनुलोमम् ॥३६॥

**वाहसाररसायामा नाहि[1]ता लसिता दिवि ।**
**तापदा गजसानाली दाना सा कनकारता ॥३७॥**

*वाहसाररसायामा । नाहि[2]ता । लसिता । दिवि ।*
*तापदा । गजसानाली दाना । सा । कनकारता ।*

---

१—ही, 'क'
२—ही, 'क'

**वाहेति ।** वाहैः अश्वैः सारा श्रेष्ठा रसा या भूमेः आयाम इव आयामो यस्यास्सा रसायामा भूमिवद्विपुलेत्यर्थः । वाहसारा च सा रसायामा चेति विशेषणसमासः । नाहिता नाहिनः सन्नाहिनो भटान् हता प्राप्ता 'नहेर्ष्टे इतादिनिप्रत्ययः । दिवि आकाशे लसिता प्रकाशमाना तापं ददातीति, तापदा, गजानां सानानां तुण्डानाम् आलिभिः पङ्क्तिभिः दानं मदम् अस्य निक्षिपतीति गजसानालीस्तद्भि[1]र्दाना सा । कनकेन काञ्चनेन आरता व्याप्ता आजगामेति पूर्वेणान्वयः । प्रतिलोमम् ।।३७।।

**अदर्शि रघुनाथेन चन्द्रहासैर्मुखोदितैः ।**
**क्रूरग्रहैर्द्यौरिव सा चन्द्रहासैर्मुखोदितैः ।।३८।।**

**अदर्शीति ।** रघुनाथेन रामेण मुखेनास्येन उदितैः प्रकाशितैः चन्द्रहासैः खड्गैः मुखैर्भटमुखैरुदितैः उक्तैः विरुतैश्चन्द्रसदृशैर्हासैः अट्टहासैश्च उप[ल]-क्षिता । अतएव क्रूरैर्भयङ्करैः ग्रहैः सूर्यादिग्रहैरित्यर्थः । मुखोदितैः रजनी-मुखजातैः चन्द्रस्य हासैः प्रकाशैश्च उप[ल]क्षिता द्यौरिव स्थिता सा सेनादर्शि दृष्टा ।।३८।।

**राघवास्फारितोद्दण्डकोदण्डगुणनिस्वनः ।**
**शुश्रुवे खरवाहिन्यां जयतामिव दुन्दुभिः ।।३९।।**
**(वैदिकश्चतुर्थपादः)**

**राघवेति ।** खरवाहिन्याः खरसेनायाः राघवेणास्फालितस्य उद्दण्ड-कोदण्डस्य गुणनिस्वनः ज्याघातध्वनिः जयतां जयशीलानां दुन्दुभिरिव शुश्रुवे श्रुतः । वैदिकश्चतुर्थपादः ।।३९।।

**राममण्डलितं स्फायादट्टहासप्रभाञ्चितम् ।**
**शशङ्के तत्र कोदण्डमौत्पातं चन्द्रमण्डलम् ।।४०।।**

**रामेति ।** तत्र तस्मिन् समये देशे वा रामेण मण्डलितं कुण्डलितम् अट्टहासं प्रभया अञ्चितं व्याप्तं स्फायात् कोदण्डं जात्या तम्, उत्पात-कालोदितं चन्द्रमण्डलं शशङ्के चन्द्रमण्डलमिति शङ्कितमित्यर्थः । मध्यस्थितस्य रामचन्द्रशरीरस्याकलङ्कस्यानघत्वादिति, भयङ्करत्वाच्चेति भावः ।।४०।।

---

१—ल्लि, 'क'

कोदण्डमण्डलीकुण्डे प्रतापानलभासुरे ।
हुताः पलाशाः रामेण सुरप्रीत्यै शरस्रुचा ॥४१॥

**कोदण्डेति** । शर एव स्रुक् तया उपलक्षितेन रामेण प्रताप एव अनलस्तेन भासुरे कोदण्डमण्डल्येव धनुर्मण्डलमेव कुण्डं [होमस्थानं] तस्मिन् पलाशाः राक्षसाः पलाशाः समिधश्च सुरप्रीत्यै देवतासन्तोषाय हुताः होमेनेव राक्षसवधेन देवतासन्तोषसम्भवादिति भावः ॥४१॥

संग्रामे रजसा भानुरुधि रञ्जितविग्रहः ।
ददृशे राघवः सान्द्ररुधिरञ्जितविग्रहः ॥४२॥

*भानुरुधि । रञ्जितविग्रहः ।*
*सान्द्ररुधिरम् । जितविग्रहः ॥*

**सङ्ग्राम इति** । राघवः रजसा चलरेणुना भानुं रुणद्धि आच्छादयतीति भानुरुध् तस्मिन् सङ्ग्रामे युधि रञ्जितविग्रहः प्रकाशितशरीरस्सन् सान्द्ररुधिरं यथा तथा[1] जितविग्रहः जितकलहः सन् ददृशे दृष्टः । दृशेः कर्मणि लिट् । ४२॥

वाणवीचीघने रामकोदण्डवडवामुखे ।
निपेतुर्दारुणारावाः खरादिजडजन्तवः ॥४३॥

**बाणेति** । वाणा एव वीचयः तैर्घने सान्द्रे, रामकोदण्डमेव बडवामुखं तस्मिन् खरः आदिर्येषां ते खरादयः ते च ते जडजन्तवः दुर्बुद्धयश्च अन्यत्र खराः क्रूरा आदयश्चिरन्तनाः जलजन्तवः लडयोरभेदन्यायात् दारुणारावा भयङ्करशब्दास्सन्तः निपेतुः पतिताः ॥४३॥

विभिदुर्मण्डलं भानोर्हतास्ते समराङ्गणे ।
मित्रभेदं हि कुर्वन्ति दुरात्मानो मृता अपि ॥४४॥

---

१– युधा तधा, 'क'

विभिदुरिति। ते खरादयो राक्षसाः समराङ्गणे हताः सन्तः भानोः सूर्यमण्डलं विभिदुः भिन्नवन्तः तथाहि दुरात्मानो दुर्जनाः मृता अपि दुरवस्थां गता अपीति च प्रतीयते। मित्रभेदं रविभेदं कुर्वन्ति सुहृदां परस्परं भेदं च कुर्वन्तीति प्रतीयते ।।४४।।

**महता रचितद्वारां लङ्कामायत दारुणा।**
**ततः क्रुद्धा शूर्पणखालङ्कामायतदारुणा ।।४५।।**

*लङ्काम् । आयत । दारुणा ।*
*अलम् । कामायतदारुणा ।*

(पादयमकम्)

**महतेति**। ततः अनन्तरं कामम् अत्यर्थम् आयता दीर्घा उन्नतेति यावत् सा च सा दारुणा चेति विशेषणसमासः। शूर्पणखानखमुखात् संज्ञायामिति[1] ङीष् निषेधो[2] णत्वं च। अलं क्रुद्धा सती महता दारुणा जातावेकवचनम्। महद्भिः दारुभिरित्यर्थः। रचितानि द्वाराणि यस्यास्सा तथोक्ता तां लङ्काम् आयत प्राप्तवती। अयतेर्लङ्। पादयमकम् ।।४५।।

**तस्या गिरा जगामाशु मारीचारुतराजितः।**
**दण्डकां रावणो देवमारी चारुतराजितः ।।४६।।**

*मारीचारुतराजितः। देवमारी। चारुतराजितः।*

(पादयमकम्)

**तस्या इति**। देवान् मारयतीति देवमारी चारुतरश्चासावजितश्चेति विशेषणकर्मधारयसमासः। रावणः [इत्यर्थः]। तस्याः शूर्पणखायाः गिरा सीतां हरेति वाक्येन मारीचस्य आरुतं सीताहरणानुकूलं सम्भाषणं तेन राजितः प्रकाशितस्सन् दण्डकाम् आशु जगाम गतः, सीताहरणार्थमिति भावः ।।४६।।

---

१—अष्टाध्यायी ४।१।५८

२—चितलेषङ्गी, 'क'

**प्रतार्य राघवौ सीतां मारीचेन मृगात्मना ।**
**अनर्थाय जहारासौ वने विषलतामिव ॥४७॥**

**प्रतार्येति** । असौ रावणः मृगाकारेण मारीचेन राघवौ रामलक्ष्मणौ प्रतार्य वञ्चयित्वा वने सीतां विषलतामिव अनर्थाय जहार हृतवान् । हरतेर्लिट् ॥४७॥

**रणप्रयोगदक्षस्य पक्षिणः प्रौढवादिनः ।**
**प्रतिवादी स पौलस्त्यो वितेने पक्षखण्डनम् ॥४८॥**

**रणेति** । प्रतिवादी प्रतिभटस्सः पौलस्त्यो रावणः प्रतिवादीति च व्यज्यते । रणप्रयोगो युद्धाचरणं तत्र दक्षस्य अन्यत्र रणं [विजिगीषोरस्त्राणां प्रयोगे आशु शरप्रयोगे][1] दक्षस्य प्रौढं वदतीति प्रौढवादीत्यस्य पक्षिणः जटायुषः अन्यत्र इममर्थं साधयामीति प्रतिपक्षपरिग्रहस्य विदुषः पक्षयोः खण्डनम् अन्यत्र पक्षस्य खण्डनं वितेने कृतवान् ॥४८॥

**निःशङ्कमङ्केलङ्केशो निधायातङ्कसङ्कुलाम् ।**
**निनाय लङ्कां वेगेन गृहालङ्कारकेतनाम् ॥४९॥**

**निःशङ्कमिति** । लङ्केशो रावणः आतङ्कसङ्कुलां भयव्याकुलां वैदेहीम् अङ्के निःशङ्कं यथा तथा निधाय, गृहाणामलङ्काराः केतनानि यस्यां सा तथोक्ता तां लङ्कां निनाय नीतवान् । नयतेर्लिट् ॥४९॥

**हत्वाश्रमं स मारीचं लक्ष्मणेहमना गतः ।**
**जगाम सीतानाशज्ञो लक्ष्मणेहमनागतः ॥५०॥**

*लक्ष्मणेहमना । गतः ।*
*लक्ष्मणा । इह । मनाक् । अतः ।*

---

१—विजिगीषुरथार्था प्रयोगे आनुकूलप्रयोगे, 'क'

**हत्वेति ।** स रामः मारीचं हत्वा लक्ष्मणं ईहते इच्छतीति लक्ष्मणेहं मनो यस्य स तथोक्तः सन् आश्रमं निजाश्रमं गतः प्राप्तवान् । इहाश्रमे लक्ष्मणा गृहसम्मार्जनादिचिह्नेनेति सीतानाशङ्कः सन् अतः निजाश्रमात् मनाक् मन्दं जगाम । सीतासञ्चयनार्थम् आश्रमान्निर्जगामेत्यर्थः ॥५०॥

**लुलोके मार्गमाणस्तां सारङ्गमितपद्धतिः ।**
**रामो जटायुषं वीतसारङ्गमितपद्धतिः ॥५१॥**

*सारङ्गमित पद्धतिः । वीतसारम् । गमितपद्धतिः ।*

**लुलोक इति ।** रामः गमिता विगमिता पदोः पादयोः हतिः घातः येन स तथोक्तं, मन्दगमनस्सन्नित्यर्थः । सारङ्गैः मृगैः मितो ज्ञापिता पद्धतिः मार्गो यस्य स तथोक्तस्सन्, तां सीतां मार्गमाणस्सन् वीतसारं विगतबलं जटायुषं लुलोके विलोकितवान् ॥५१॥

**सीताहरं ततो धीमानाकर्ण्य दशकन्धरम् ।**
**ददाह तं ततो लोकैर्नाकर्ण्य दशकन्धरम् ॥५२॥**

**सीतेति ।** धीमान् रामः ततः जटायुषस्सकाशात् दशकन्धरं रावणं सीताहरं सन्तमाकर्ण्य श्रुत्वा ततः अनन्तरं लोकैर्नाकर्ण्य अनाकर्ण्य दुःश्रवेति यावत् दशा मरणरूपावस्था यस्य स तथोक्तः तम् । बहुव्रीहौ कप्रत्ययः । धरं पर्वतकल्पं तं जटायुषं ददाह दग्धवान् । दहेर्लिट् ॥५२॥

**चरन्नयोमुखीं हत्वा स ततो लक्ष्मणाग्रजः ।**
**सकबन्धं महारण्यं निष्कबन्धं समातनोत् ॥५३॥**

**चरन्निति ।** सः लक्ष्मणाग्रजो रामः ततो जटायुषः हननानन्तरं चरन् पर्यटन् अयोमुखीं नाम राक्षसीं जित्वा सकबन्धं कबन्ध[स]हि[त]मपि महारण्यं निष्कबन्धं कृतवानिति शब्दतो विरोधः । निर्गतकबन्धनामराक्षसं कृतवानिति परिहारः । अतएव विरोधाभासोऽलङ्कारः ॥५३॥

**सपर्यामथ पर्याप्तां शबर्याः प्राप्य राघवः ।**
**दृष्ट्वाभाषत सौमित्रीं रम्यं पम्पोपकाननम् ।।५४।।**

**सपर्यामिति ।** अथ अनन्तरं राघवो रामः शबर्यास्सकाशात् पर्याप्तां स्वोचितां सपर्यां पूजां प्राप्य रम्यं पम्पोपकाननं पम्पातीरकाननं दृष्ट्वा सौमित्रीम् अभाषत भाषितवान् । भाषतेर्लङ् ।।५४।।

**रोलम्बावलिरोमालीरुल्लसत्पल्लवाधरा ।**
**सीतेवात्र वसन्तश्रीः दृश्यते सपिकस्वरा ।।५५।।**

**रोलम्बेति ।** अत्र पम्पोपकानने रोलम्बावलिः भृङ्गपङ्क्तिः सैव रोमावलिः यस्यास्सा तथोक्ता, अन्यत्र रोलम्बावलिसदृशो रोमावलिः यस्यास्सा तथोक्ता । अन्यत्र पल्लवसदृशाधरा । पिकानां स्वरसहिता सपिकस्वरा । अन्यत्र पिकसदृशस्वरसहिता । वसन्तश्रीः वसन्तलक्ष्मीः सीतेव दृश्यते ।।५५।।

**प्रमुष्टसुमनोगन्धसमानीतशिलीमुखः ।**
**पाटच्चर इव क्रूरः स्यन्दते मन्दमारुतः ।।५६।।**

**प्रमुष्टेति ।** प्रमुष्टः चोरितः सुमनोगन्धः पुष्पसौरभं येन स तथोक्तः । अन्यत्र प्रमुष्टः सुमनसां मनस्विनां गन्धः गन्धद्रव्यं येन स तथोक्तः समानीताः शिलीमुखाः भृङ्गा येन स तथोक्तः । अन्यत्र समानीताः शिलीमुखाः बाणाः दीपनिवारकमुखवायुना स तथोक्तः । अतएव पाटच्चरः चौर इव क्रूरः मन्दमारुतः स्यन्दते प्रवर्तते । स्यन्दतेर्लट् ।।५६।।

**कोकिलानां कलालापाः कान्दर्पाः काहलस्वनाः ।**
**परागाः परिदृश्यन्ते पृतनाचलरेणवः ।।५७।।**

**कोकिलानामिति ।** कोकिलानां कलालापाः अव्यक्तमधुरालापाः कान्दर्पाः कन्दर्पसम्वन्धिनः काहलस्वनाः काहलध्वनयस्सन्तः श्रूयन्त इति शेषः । परागाः पुष्परजांसि कान्दर्पाः पृतनायाः सेनायाः चला चञ्चला रेणवः रजांसि परिदृश्यन्ते परितो लक्ष्यन्ते भेदे अभेदकथनादतिशयोक्तिरलङ्कारः ।।५७।।

मरन्दो मधुपालग्नो माधवीकुसुमस्नुतः ।
महान्मद इवाभाति मनोभूमत्तदन्तिनः ॥५८॥

मरन्द इति । माधवीनां वासन्तीनां कुसुमेभ्यः स्नुतः मधुपैः भृङ्गैः आलग्नः आसक्तः मरन्दो मकरन्दः मनोभूरेव मत्तदन्ती तस्य महान् मदः [दानजलमिव] आभाति ॥५८॥

द्रुमालिङ्गनसम्मर्दाद्गलितेव पतत्यसौ ।
मधुश्रीहारमुक्ताली मधूकात्कुसुमावलिः ॥५९॥

द्रुमेति । मधूकात् मृद्वीकवृक्षात् गलिताः स्रस्ता असौ कुसुमावलिः पुष्पपङ्क्तिः द्रुमाणाम् आलिङ्गनसम्मर्दात् गलिता मधुश्रियः वसन्तलक्ष्म्याः हारस्य मुक्तावली मौक्तिकपङ्क्तिरिव पङ्क्तिः ॥५९॥

अशोककुसुमालीयं शक्यन्ते विप्रयोगिषु ।
प्रवृत्ताशम्बरारातेराग्नेयास्त्रपरम्परा ॥६०॥

अशोक इति । इयम् अशोककुसुमानामालिः पङ्क्तिः वियोगिषु विषये प्रवृत्ता प्रसृता शम्बरारातेर्मन्मथस्य आग्नेयास्त्रपरम्परा इति शक्यन्ते ॥६०॥

मधुपश्रेणिवीणाभिर्मुखराभिर्मनोहरम् ।
मनोभुवोऽग्रे माधव्यो गान्धर्वमिव कुर्वते ॥६१॥

मधुपेति । माधव्यो [वसन्तः मधुपानां श्रेण्यः पङ्क्तय एव वीणाः वाद्यविशेषस्ताभिः] मनोहरा यथा तथा मुखराभिः ध्वनन्तीभिः हेतुभिः मनोभुवो मन्मथस्य अग्रे पुरतः गान्धर्वं गीतं कुर्वत इवेत्युत्प्रेक्षा ॥६१॥

कलितं वनमातनुतेऽसुभिदा
मधुना मधुना मधुना मधुना ।

**दयितेव यमद्य धिनोति लता ।**
**सह सा सहसा सहसा सहसा ।।६२।।**

*अधुना । मधुना । मधुना मधुना ।*
*सह । सा । सहसा । सहसा । सहसा ।*

**कलितमिति ।** मधुना मकरन्देन कलितं व्याप्तं वनं पम्पोपवनं, मधुना वसन्ते[न] मधुना मधुना मध्वसुरेण सह यं वसन्तमधुना वनेन सहितेत्यर्थः । व्यक्तरूपकम् । अधुना इदानीम् असुभिदां प्राणभेदनम् आतनुते करोति विहारिणामिति शेषः । सा पुरोवर्तिनी पुष्पितेत्यर्थः । लता सहसा हासहिता, मम दयिता[1] नवचम्पकवल्ली नूतनचाम्पेयलता क्षितिजा [द]यितेव सीतेव सहसा सहसा शीघ्रं शीघ्रम् अद्य धिनोति प्रीणयति । चतुस्तवकयमकम् ।।६२।।

**कलये नवचम्पकवल्लिमिमा-**
**मलिनामलिनामरिणामलिना ।**
**क्षितिजामिह या क्रियते मरुता-**
**दरसादलसा दलसादलसा ।।६३।।**

*अलिना । अमलिनाम् । अरिणा । मलिना ।*
*आदरसात् । अलसा । दलसा । दलसा ।*

**कलय इति ।** सहसा मलिना मालिन्यवता अरिणा शत्रुभूतेन अलिना भृङ्गेन अमलिनाम् अश्यामाम् असंस्पृष्टामित्यर्थः । इमां नव चम्पकवल्लीं नूतनचाम्पेयलतां क्षितिजां सीतां कलये मन्ये, भूमिजत्वाविशेषादिति भावः । दलानामधोवस्त्राणां[2] सादः लाभः तेन लसतीति लसा शोभिता मरुता वायुना अलसा अचञ्चला या चम्पकलता आदरसात् आदराधीना क्रियते आदरविषयी क्रियते इत्यर्थः ।।६३।।

---

१—दद्विमा, 'क'
२—दक्षा धावस्त्राणां, 'क'

इत्याकलय्य विपिनान्तवसन्तलक्ष्मीं
सीतां वियोगविधुरो विहितप्रलापः ।
खेलं निलिम्पललनाकुचकोककम्पां
पम्पामवाप खरजित् कृतगात्रकम्पाम् ॥६४॥

इति श्रीचरकूरिकोण्डुभट्टोपाध्यायपौत्रेण यज्ञनारायणभट्टतनयेन येङ्कटेश्वरेण सर्वाम्बिकागर्भशुक्तिमुक्तामणिना विरचिते चित्रबन्धरामायणे महाकाव्ये अरण्यकाण्डकथा सम्पूर्णा तृतीयः सर्गः ॥३॥

इतीति । सीता वियोगविह्वलः खरजिद् रामः इति [अ]नेन प्रकारेण विपिनान्ते वसन्तलक्ष्मीम् आकलय्य निर्वर्ण्य विहिताः प्रला[पाः] विरहप्रलापा येन स तथोक्तस्सन्, खेलन्तीनां क्रीडन्तीनां निलिम्पललनानां सुराङ्गनानां कुचकोकैः कम्पाङ्कीपमानां, कृतः गात्रस्य कम्पो यया तां तथोक्तां तां पम्पाम् अवाप प्राप्तः ॥६४॥

इति श्रीचरकूरिकोण्डुभट्टोपाध्यायतनययज्ञनारायणभट्टविरचितायां चित्रबन्धरामायणव्याख्यायां बालप्रबोधाख्यायां तृतीयः सर्गः ॥३॥

## चतुर्थः सर्गः

पम्पाकूले चणोद्भीतो वीच्य वीरौ खरांशुभूः ।
कम्पालोलेच्चणो जातो लच्यसारौ पराधिभूः ॥ १ ॥
(गोमूत्रिकाबन्धः)

पम्पेति । पराधीनामुत्कृष्टमनः पीडानां भूः स्थानं बालिकृतदारहरणादिनेति भावः, खरांशुभूः सूर्यतनयः सुग्रीवः लक्ष्यसारौ प्रेक्षणाय बलौ वीरौ रामलक्ष्मणौ पम्पाकूले वीक्ष्य दृष्ट्वा क्षणे दर्शनक्षण एव उद्भीतो विह्वलः सन् कम्पेन आलोले ईक्षणे यस्य स तथोक्तो जातः । गोमूत्रिकाबन्धः। बन्धोद्धारप्रकारस्तु तिर्यग्रेखात्रयं लिखित्वा अष्टादशोर्ध्वरेखा लिखित्वा सम्पन्ने पङ्क्तिद्वयेऽपि क्रमेणार्धद्वयं लिखित्वा प्रथमपङ्क्त्याद्यक्षरमारभ्य द्वितीयपङ्क्तिप्रथमाक्षरं त्यक्त्वा तदीयद्वितीयाक्षरं पठित्वा प्रथमपङ्क्तितृतीयाक्षरं पठेत् एवं क्रमेण एकैकाक्षरं पठेत् । एवं क्रमेण एकैकाक्षरपरित्यागेन पङ्क्तिद्वयाक्षरपाठे सति गोमूत्रिकाकारेण प्रथमाक्षरः दृश्यते । एवं द्वितीयपङ्क्तिप्रथमाक्षरमारभ्य प्रथमपङ्क्तिप्रथमाक्षरं त्यक्त्वा तदीयद्वितीयाक्षरं पठित्वा द्वितीयपङ्क्तितृतीयाक्षरं पठेत् । एवं क्रमेण एकैकाक्षरपरित्यागेन पङ्क्तिद्वयाक्षरपाठे सति गोमूत्रिकाकारेण द्वितीयार्धं दृश्यते इति गोमूत्रिका बन्धोद्धारसंक्षेपः ।। १ ।।

ताभ्यां सन्धानमन्विच्छन् प्रेषयामास मारुतिम् ।
सुग्रीवो दुर्घटश्रेयो घटनापटिमाधिकम् ॥ २ ॥

ताभ्यामिति । सुग्रीवस्ताभ्यां रामलक्ष्मणाभ्यां सन्धानं सन्धिम् अन्विच्छन् कांक्षमाणस्सन् दुर्घटस्य श्रेयसो घटनापादितपटिम्ना नैपुण्येन अधिकं मारुतिं हनूमन्तं प्रेषयामास प्रेषित[वान्] ॥ २ ॥

हनूमान् विषयाधारो भीमं चापधरं पटुः ।
तनूमान् विनयासारो रामं प्राप वरं वटुः ॥ ३ ॥

(स एव बन्धः)

हनूमानिति । विषयस्य उद्देश्यकार्यस्य आधारः तनूमान् विनयासारमूर्तिः विनयप्रसाररूपः । पटुर्दक्षः हनूमान् वटुर्ब्रह्मचारीवेशधारी सन् चापधरम् अत एव भीमं वरं श्रेष्ठं रामं प्राप । गोमूत्रिकाबन्धः । तदुद्धारप्रकारस्तु पूर्वत्रैवोक्तः ॥ ३ ॥

विज्ञाय स तदाकूतमाननन्द विलोभिना ।
राज्ञापि समुदाधीतं वनवृन्दविलोलिना ॥ ४ ॥

(स एव बन्धः)

विज्ञायेति । स हनूमान् [वि]लोभिना राममैत्र्या विशेषलोभवता अतएव समुदा ससन्तोषेण वनवृन्दे विलोलिना सञ्चारिणापि, अपि शब्दश्चार्थः, राज्ञा सुग्रीवेण अधीतमभ्यस्तं कांक्षितमिति यावत् । तदाकूतं तस्य रामस्य सुग्रीवस्नेहरूपाभिप्रायं विज्ञाय ज्ञात्वा आननन्द सन्तुष्टवान् । स एव बन्धः ॥ ४ ॥

सुग्रीवं तमतिस्रस्तं निनाय रघुनन्दनौ ।
व्यग्रीभूतमतिस्रस्तं सनाकेरमनन्दनौ ॥ ५ ॥

(स एव बन्धः)

सुग्रीवमिति । स हनूमान् नाकेरमन्त इति नाकरमाः देवास्तान् नन्दयत इति नाकेरमनन्दनौ रामलक्ष्मणौ अतिस्रस्तमत्यन्तं स्वस्थानाद्

गलितम्, अतएव व्यग्रीभूता मतिर्यस्य स तथोक्तः। स चासौ त्रस्तः भीतश्चेति विशेषणकर्मधारयः। तं सुग्रीवं निनाय प्रापितवान्। स एव वन्धः ॥ ५ ॥

न केवलं तयोरासीन्मैत्री पावकसाक्षिका।
रामसुग्रीवयोस्तस्य प्रतापानलसाक्षिका ॥ ६ ॥

नेति। तयोः रामसुग्रीवयोः मैत्रीसख्यं केवलं पावकसाक्षिका अग्निसाक्षिका नासीत् किन्तु तस्य रामस्य प्रतापानलसाक्षिका चासीत्। रामेण वालिवधस्य प्रतिज्ञातत्वात् तदीयप्रतापाग्निरपि तत्र साक्षी जात इतिभावः ॥ ६ ॥

जहसे गगने लोकैः स्नेहं साचयचरन्तयोः।
रहस्ये गगनेऽनेकैः सोहं वीक्ष्य निरन्तयोः ॥ ७ ॥

जहस इति। रहस्येकान्तभूते गहने वने निरन्तयोः अनपाययोः तयोः रामसुग्रीवयोः सोहं वालिवधसीतामार्गणाद्यूहसहितं साक्षिणा अग्निरूपसाक्षिणा अचरं स्थिरं स्नेहं वीक्ष्य अनेकैः गगने लोकैः खेचरैर्देवैरिति यावत्, जहसे हसितम्। रावणो मृत एवेति सहस्ततालं देवैर्हसितमिति भावः। स एव बन्धः ॥ ७ ॥

स्थापितं हृदि रामेण तद्दत्तं दारभूषणम्।
विरहानलसन्तप्ते न दुद्रावाश्रुबिन्दुभिः ॥ ८ ॥

स्थापितमिति। तेन सुग्रीवेण दत्तं तद्दत्तं दारभूषणं सीताभूषणं रामेण विरहानलसन्तप्ते हृदि हृदये स्थापितं सत अश्रुविन्दुभिः शोकवाष्पकरणैर्न दुद्राव न द्रुतम्। यथाग्नितप्तमपि सुवर्णं जललवसंयोगे सति न द्रवति तथैवेति भावः। अनेन विरहदुःखातिशयो व्यज्यते ॥ ८ ॥

स्तनोत्तरीयं सीताया रामात्तं जगदुत्तरम्।
निषिक्तमश्रुपातेन शुष्कं श्वासानिलैरभूत् ॥९॥

**स्तनोत्तरीयमिति**। [रामेणात्तं?] रामेणादत्तं गृहीतं जगदुत्तरं लोकोत्तरं सीतायाः स्तनोत्तरीयम् अश्रुपातेन वाष्पपतनेन [नि]सिक्तं सित(क्तं) श्वासानिलैर्निश्वासवातैः शुष्कमभूत्। यथा लोके जलार्द्रं वस्त्रं वायुना शुष्कं भवति तथैवेति भावः। अत्रापि श्लोके रामस्य शोकविरहातिशयो व्यज्यते ॥९॥

**क्षिपता दुन्दुभेः कायमपि दूरं खरारिणा ।**
**उदपाद्यत विश्वासो नासारस्यात्तयोः कपेः ॥ १० ॥**

**क्षिपतेति**। दुन्दुभेः कायं दूरमपि क्षिपता प्रेरयता खरारिणा रामेण तयोः सुग्रीवदुन्दुभिकाययोः असारस्यात् असरसत्वात् कपेः सुग्रीवस्य विश्वासो नोदपाद्यत। णिजन्तात्कर्मणि लङ्। अत्र सुग्रीवस्य दुन्दुभिकाय-रामबलानभिज्ञानात् असारस्य दुन्दुभिकायस्य चिरशुष्कत्वादसारस्यमिति भावः ॥ १० ॥

**प्रत्ययाय हरीशस्य सालाः कृत्ताः महेषुणा ।**
**सत्यभूयपरीतस्य लोलाः सीतामहेषिणा ॥ ११ ॥**

(स एव बन्धः)

**प्रत्ययायेति**। सीतायाः महप्राप्तिरूपोत्सवः तमिच्छतीति सीतामहे-षिणा रामेण कर्त्रा सत्यं भूयं सत्यभावः सत्यसम्बन्धत्वमिति यावत् तेन परीतस्य व्याप्तस्य तद्युक्तस्येत्यर्थः। हरीशस्य सुग्रीवस्य प्रत्ययाय विश्वासाय महेषुणा महता बाणेन करणेन लोलाश्चञ्चलास्साला वृक्षाः कृत्ताः खण्डीकृताः खण्डिताः। स एव बन्धः ॥ ११ ॥

**हन्तुं कृतागसं शार्ङ्गि पुरोपान्तं परागतः ।**
**वृण्वन्दिशः स सकपिः पुरोपान्तं परागतः ॥ १२ ॥**

*पुरा। उपान्तम्। परागतः। पुरोपान्तम् परागतः॥*

**हन्तुमिति**। सकपिः सुग्रीवसहितः सः रामः पुरा पूर्वं कृतागसं कृतसोदरदारहरणरूपापराधं उपान्तं प्राप्तप्राणान्तकालं शार्ङ्गि शक्रतनयं

बालिनं शक्रशब्दा'दतइञि'[1]ति इञ् प्रत्ययः। हन्तुं हिंसितुं परागैः भूपरागैः। 'सार्वविभक्तिकस्तसिल्' दिशोवृण्वन् छादयन् सन् पुरस्य किष्किन्धायाः उपान्तं प्रान्तभागं परागतः प्राप्तवान्। पादयमकम् ।। १२ ।।

तारया वारितो भ्रातृगिराहूतोऽति[2]तारया।
तारयामास तां शोकं [3]बालिः भीमस्स तारया ।।१३।।

**तारयेति**। तारया कनीनिकया 'तरकाक्षणः कनीनिके'त्यमरः। भीमो भयङ्करः बालिः अतितारया अत्युच्चैः [त]या भ्रातृगिरा सुग्रीववचसा आहूतः युद्धायाकारितः। अत एव तारय[ा वा]रितः निवारितः सन् तां तारां तारयामास तारितवान्। ताराशोकं निवारितवानित्यर्थः। गतिबुद्धीत्यादिना द्विकर्मकत्वम् ।। १३ ।।

सङ्गरं वनजातेन चक्रे बालिकृतध्वनिः।
सङ्गतोऽवरजातेन वक्रे केलिकृतध्वनिः ।।१४।।

**सङ्गरमिति**। वक्रे अध्वनि मार्गे केलिं करोतीति केलिकृत् वक्ररीत्या मार्गे चङ्क्रमणकारीत्यर्थः बालिः अवरजातेन कपिना सुग्रीवेणेत्यर्थः। सङ्गतस्सन् कृतः ध्वनिः सिंहनादो यस्मिन् कर्मणि तत्तथा, सङ्गरं युद्धं चक्रे कृतवान्। करोतेर्लिट्। स एव बन्धः ।। १४ ।।

भग्नोऽनीके स रामेण निजमानेन लालितः।
मग्नोऽव्यके स रागेण गजस्नेन चिह्नितिः ।।१५।।

भग्न इति। स सुग्रीवः अनीके बालिना सह युद्धे भग्नः भङ्गं प्राप्तः। अतएव अव्य के अतिदुःखे मग्नः, अतएव सरागेण अनुरागसहितेन रामेण कर्त्रा निजमानेन स्वकीयमानोपरि [ गर्व ] शीलेन लालितः उपलालितः

---

१ –अष्टाध्यायी (४।१।९५)
२ —वितारया, 'क'
३—गालिभीमस्सतालया, 'क'

सन्, गजसूनेन गजपुष्पेण चिह्नितः। अभूदितिशेषः। युद्धे बालितो भेदज्ञानाय गजनामकव्रततिविशेषकुसुमिताङ्कितो जात इत्यर्थः ।। १५ ।।

युयुधे बालिना भूयो मुष्टामुष्टि समेत्य सः ।
घटितांसमहानादं दष्टाधरमटन्नगम् ।।१६।।

**युयुधे** इति। स सुग्रीवः भूयः पुनः समेत्य युद्धभूमिं प्राप्य घटितावंसौ यस्मिन् कर्मणि तत्तथा, महान् नादः सिंहनादः यस्मिन् कर्मणि तत्तथा, अटन्तः विक्षेपेण चलन्तः नग[ा] वृक्षाः पर्वता वा यस्मिन् कर्मणि तत्तथा, बालिना सह मुष्टिभिश्च मुष्टिं प्रहृत्य मुष्टामुष्टि युयुधे। मल्लयुद्धं चक्रे। मुष्टामुष्टीत्यत्र तत्र तेनेदमिति सरूप इति सरूपतृतीयान्तसमासः। 'आत्वं वानची'ति पूर्वपदस्यात्वं वा। स्वभावोक्तिरलङ्कारः ।। १६ ।।

सुग्रीवं राघवो भूरि सन्दधे वीक्ष्य सायकम् ।
सग्रीवं लाघवोत्थारिवृन्दलावी स साधकम् ।।१७।।

**सुग्रीवमिति**। लाघवेन सत्वरेण उत्तिष्ठन्तीति लाघवोत्थाः ते चते अरयश्च तेषां वृन्दलावी समूहच्छेदी राघवः रामः सुग्रीवं ग्रीवासहितं [कन्ध]रावशेषं भग्नकल्पं स्थितमिति अर्थः। सुग्रीवं भूरि यथा तथा वीक्ष्य साधकं रणजयसम्पादकं सायकं वाणं सन्दधे सन्निहितवान्। स एव बन्धः ।। १७ ।।

बाणेन पतितस्तस्य कृत्तो बालिः धरातले ।
रावेण परितस्त्रस्यच्चित्तो धूलिभराविले ।।१८।।

**बाणेनेति** । रावेण गुणध्वनिना परितः सर्वतः यत्त्रस्यच्चित्तः विभ्यन्मानसः बालिः वाणेन कृत्तः छिन्नः अतएव धूलिभरेण रेणुसंघेन आविले व्याप्ते धरातले भूतले पतितः अभूदिति शेषः। स एव बन्धः ।। १८ ।।

निन्दितो बालिना रामो व्याधलीलानुसारतः ।
नन्दितो वादिना वामो योऽघवेलानुसारितः ॥१९॥

(स एव बन्धः)

**निन्दित इति**। वामः वक्रः रामः वादिना वक्त्रा बालिना कर्त्रा व्याधलीलया किरातचेष्टया अनुसारितः निन्दितः अभूदिति शेषः। किरात इव वृक्षमूले लीन एव हतवान् न तु शूररीत्या रणे आभिमुख्येन स्थित्वेति निन्दित इत्यर्थः। पश्चाद्योऽघवेला पापीजनवधरूपमर्यादा तस्या अनुसारतः अनुसारेण नन्दितः सन्तोषितः अभूदिति शेषः। भ्रातृभार्याहरणेन पापिनं मां शूरमर्याद[यैव] हतवान् नान्ययेति सन्तोषितश्चाभूदिति भावः ॥ १९ ॥

स भ्रातृमन्युशल्येन सममुद्धरति स्म तम् ।
शरं तस्यासुभिः साकमुच्चचाल च शोणितम् ॥२०॥

**स इति**। स रामः भ्रातुः सुग्रीवस्य मन्युरेव शल्यं तेन समं तं बालिमर्मणि लग्नं शरमुद्धरति स्म उद्धृतवान्। शरोद्धरणमात्रेणैव सुग्रीवस्य द्वेषोऽपि गत इति भावः। तस्य बालिनः असुभिः प्राणैः साकं शोणितं रक्तं चोच्चचाल उच्चलितं सहालङ्कारः ॥२०॥

वैकुण्ठं बालिने दत्वा रामोऽकुण्ठितविक्रमः ।
सुग्रीवाय ददौ राज्यमनपाय सुखास्पदम् ॥२१॥

**वैकुण्ठमिति**। अकुण्ठितविक्रमो यस्य स तथोक्तः, स रामः बालिने वैकुण्ठं दत्वा सुग्रीवायानपायं सुखास्पदम् अनश्वरसौख्यनिदानं राज्यं ददौ दत्तवान्। ददातेर्लिट् ॥२१॥

समया माल्यवत्प्रस्थं समयाप्तो हरीश्वरम् ।
समयामरराल्लक्ष्म्या समया प्रीणयन् स्थितः ॥२२॥

**समयेति**। स रामः समयं सङ्केतम् आप्तः प्राप्तस्सन् वर्षामासचतुष्टयानन्तरं रावणवधयत्नः कर्तव्य इति कृतसङ्केत इत्यर्थः। हरीश्वरं सुग्रीवं सु[र]राल्लक्ष्म्या महेन्द्रस्वराज्यलक्ष्म्या समया तुल्यया मया राज्यलक्ष्म्या

प्रीणयन् सन्तोषयन् माल्यवत्प्रस्थं समया माल्यवत्सानोर्निकटे, 'अभितः परितः' इत्यादिना द्वितीया, स्थितः ।।२२।।

घनागमेन तत्रासे शक्रचापकयोगिना ।
वनानमे पतत्त्रासे वक्रतापवियोगिना ।।२३।।

(स एव बन्धः)

अष्टभिः श्लोकैः वर्षर्तुमेव वर्णयति—

**घनागमेनेत्यादिना** । वनैरानमतीति वनानमः तस्मिन् सान्द्रवन इत्यर्थः । पतन् प्रवर्तमानस्त्रासो भयं यस्मिन् तथोक्तः तस्मिन् । तत्र माल्यवति शक्रचापकयोगिना इन्द्रचापसम्बन्धिना, स्वार्थे कप्रत्ययः । वक्रः दुःसहः तापो येषां ते वक्रतापाः तादृशा वियोगिनो यस्मिन् स तथोक्तः तेन घनागमेन वर्षासमयेन आसे स्थितम् । आस्तेर्भावे लिट् । स एव बन्धः ।।२३।।

मदनश्वासवातोग्रैर्ववले पवनाङ्कुरैः ।
नदविश्वासवादाग्रैर्नवनीपवनाङ्कुरैः ।।२४।।

(स एव बन्धः)

**मदनमिति** । मदन श्वासवातवत् मन्मथनिःश्वासवायुवत् उग्रैर्विरहि-भयङ्करैर्नदानां विश्वासवादे विश्वासवचने अग्रैः श्रेष्ठैर्भवतां पूरणार्थमवश्यं वृष्टिरायास्यतीति सूचयद्भिरित्यर्थः । वनेषु नीपवनेपु अङ्कुरैः पवनाङ्कुरैः पुरोवातप्ररोहैर्ववले प्रवृत्तम्, अङ्कुरैरित्यत्र रलयोरभेदन्यायेन गोमूत्रिका-बन्धपूरणं द्रष्टव्यम् ।।२४।।

अभिषिक्तं रूषालोक्य सुग्रीवं बालिवैरिणा ।
माल्यवद्भूभृतं वृष्ट्या शक्रो वाभिषिञ्चति ।।२५।।

**अभिषिक्तमिति** । शक्रो महेन्द्रः बालिवैरिणा स्वपुत्रघातिना रामेण अभिषिक्तं सुग्रीवम् आलोक्य रूषा कोपेन वृष्ट्या वर्षेण माल्यवान् भूभृद् गिरिः तं राजानमिति च ध्वन्यते । अभिषिञ्चति स्म अभिषिक्तवानिव । लोके महाराजः स्वयमन्यमभिषिञ्चति एवमेवेति भावः ।।२५।।

पतिता प्रसृतेऽन्योन्यं कलहे घनदन्तिनाम् ।
मौक्तिकासृक्कणा नूनं करकाः शक्रगोपकाः ॥२६॥

पतिता इति । करका वर्षोपलाः शक्रगोपकाः इन्द्रगोपकाश्च घनमेघाः त एव घनदन्तिनः मत्तेभाः, तेषामन्योन्यं कलहे युद्धे प्रसृते प्रवृत्ते सति पतिता भुवि स्रस्ताः क्रमेण मौक्तिकानि च असृक्कणाश्च नूनम् अत्र करकाणां मुक्ताफलत्वमिन्द्रगोपानां च रक्तविन्दुत्वं च (?) क्रमेणोत्प्रेक्ष्यते इत्युत्प्रेक्षा-लङ्कारः ॥२६॥

रसिता रचितामोदैर्ननृते च कलापिभिः ।
लसिता रहिता नादैः सनृमुच्चपलापिभिः ॥२७॥

(स एव बन्धः)

रसितेति । चपला विद्युत् आप्नुवन्तीति चपलापिनः तैः, अनेन विद्युतां नाट्यसहकारीभूतदीपिकासाम्यं ध्वन्यते । रसितेन गर्जितेन आरचितः आमोदो येषां ते तथोक्तास्तैः, अनेन मयूरनादस्य गीतसाम्यं व्यज्यते । कलापिभिर्मयूरैः सनृमुत् समनुष्यसन्तोषं यथा तथा ननृते नृत्तम् । नृत्यतेर्भावे लिट् । स एव बन्धः ॥२७॥

शशङ्के केतकीरेखा वनान्ते भृङ्गसङ्कुला ।
पतिता कण्टकालग्ना साब्दखण्डा तडिद्द्युतिः ॥२८॥

शशङ्क इति । वनान्ते भृङ्गसङ्कुला भ्रमरव्याप्ता केतकीरेखा केतकीदलं पतिता केतकीषु पतिता अतएव कण्टकैरालग्ना साब्दखण्डा मेघखण्डसहिता, तडिद्द्युतिर्विद्युत्कान्तिः शशङ्के शङ्कितेत्युप्रेक्षा ॥२८॥

केतकीच्छदनस्याग्रे चलन् भृङ्गः सकण्टके ।
वर्षादुर्गामुदे गुञ्जन् तुलायन्त्र इवानटत् ॥२९॥

केतकीति । सकण्टके कण्टकसहिते केतक्याः छदनस्य दलस्य अग्रे चलन् गुञ्जन् ध्वनन् भृङ्गाः वर्षैव दुर्गा तस्याः मुदे सन्तोषाय तुलायन्त्रे

अनटदिव नटितवानिवेत्युत्प्रेक्षा । अत्र लोके तामसः पुमान् दुर्गासन्तोषस्य सकण्टकप्रोतपृष्ठभागः तुलायन्त्रे घोष्यमाणः सन् अटतीति लौकिकी रीतिरनुसन्धेया ।।२९।।

**प्रथमा पयसां धारा रेजिरे गगनाजिरे ।**
**पर्जन्यस्य मुनेरार्द्रा लम्बमाना जटा इव ।।३०।।**

**प्रथमा** इति । गगनाजिरे आकाशाङ्गणे प्रथमाः पयसां जलानां धाराः पर्जन्यस्यैव मुने[रि] ति व्यस्तरूपकम् । आर्द्राः जलसिक्ता लम्बमाना जटा इव रेजिरे राजितवत्यः ।।३०।।

**वसंस्तत्र तदा रामो मैथिलीविरहातुरः ।**
**समीपस्थमुवाचेदं लक्ष्मणं शुभलक्षणम् ।।३१।।**

वर्षाकाले रामस्य विरहवेदनां वर्णयितुं पातनिकामाह--

**वसंस्तत्रे**त्यादिना । तदा वर्षाकाले तत्र माल्यवति वसन् रामः मैथिलीविरहातुरः सन् समीपस्थं शुभलक्षणं लक्ष्मणमुवाच उक्तवान् ।।३१।।

**घना घना घनघना नाघनाना घनाघनाः ।**
**धाराधरा धराधारा राधा धाराधरा धुरि ।।३२।।**

*घना घनाः । घनघनाः । नाघनाना । घनाघना ।*
*धाराधराः । धराधाराः । राधाः । धाराधराः । धुरि ।।*

**(चतुरक्षरी)**

वचन प्रकारमेव पञ्चभिः श्लोकैराह--

**घनाघना** इत्यादिना । हे नाघ पापरहितलक्षणधरः पर्वतः माल्यवानित्यर्थः । स एव आधारो येषां ते धराधरा धरन्तीति धराः, धाराणां जलसन्ततीनां धरा धाराधराः, घनाघनाः धातुका विरहिणामिति शेषः । हन्तेः कुत्वं[1] चेति हन्तेरचि कुत्वद्वित्वाभ्यासङ्गमा, घनघना अत्यन्तमधिका, नाना

---

1—हन्त्वेः कुत्वं, 'क'

नानाविधाः। घनाघना वर्षुकमेघाः, धुरि अग्रे राध्यन्तीति राधाः, हिंसका इत्यर्थः। हिंसार्थाद्राधतेः पचाद्यच्। धाराधराः मत्प्रहरणहेतुभूताः खड्गा एव न मेघा इत्यर्थः। अत्र उभयोरभेदकथनेन अपह्नवो व्यज्यत इत्यलङ्कारेणालङ्कार ध्वनिः। चतुरक्षरी ॥३२॥

सौमित्र कृतदौर्जन्यं पर्जन्यं खण्डयेषुभिः।
श्लाघनीयमिदं वीर हरकोदण्ड खण्डनात् ॥३३॥

**सौमित्र इति।** हे वीर सौमित्र लक्ष्मण, कृतं दौर्जन्यं मद्वधरूपं येन स तथोक्तः तं पर्जन्यम् इषुभिर्बाणैः खण्डय प्रहर। ननु पर्जन्यवधेन किं लभ्यत इत्याशङ्क्याह। श्लाघनीयमिति इदं पर्जन्यहननं हरकोदण्डखण्डनादपि श्लाघनीयम्। इन्द्रचापस्य हरचापवत् स्वेन खण्डयितुमशक्यत्वात्तेन तथाधिकप्रतापलाभ इति भावः ॥३३॥

इन्द्रकोदण्ड मुद्दण्डं शकली कुरु सायकैः।
श्लाघनीयमिदं वीर खरस्यापि विहिंसनात् ॥३४॥

[१]**इन्द्रेति।** हे वीर उद्दण्डं प्रौढं इन्द्रकोदण्डम् इन्द्रचापं सायकैः शकली कुरु भिन्नं कुरु। ननु अनेन किं लभ्यत इत्याशङ्क्याह। श्लाघनीयमिति। इदं इन्द्रचापखण्डनं खरस्य विहिंसनादपि वधादपि श्लाघनीयम्। मम दुर्जयस्य पर्जन्यस्य वधेन मत्कृतखरवधादप्यधिकः प्रतापः त्वया लभ्यत इति भावः ॥३४॥

---

१—मातृकायां ३३ इत्यस्य पद्यस्य टीकायां 'खरस्य विहिंसनादपि' इति इत आरभ्य ३४ इत्यस्य पद्यस्य 'इन्द्रचापखण्डनं' यावत् (खरस्य विहिंसनादपि वधादपि श्लाघनीयं मम दुर्जयस्य पर्जन्यस्य वधेन मत्कृतखरवधादप्यधिकः प्रतापः त्वया लभ्यत इति भावः ॥३३॥

इन्द्रेति। हे वीर उद्दण्डं प्रौढं इन्द्रकोदण्डं इन्द्रचापं सायकैः शकली कुरु भिन्नं कुरु। नन्वनेन किं लभ्यते इत्याशङ्क्याह। श्लाघनीयमिति। इन्द्रचाप खण्डनं) अंशस्य केनापि पद्येन साकल्येन सम्बन्धः नास्ति। पूर्वापरौ विपर्यासेन आत्मनोः, औचित्यं प्रतिपादयतः। एवं विहिते सति ३४ इत्यस्य श्लोकस्य टीका समुद्भूता।

प्रकाशमानामाकाशे चञ्चलां विनिपातय ।
श्लाघनीयमिदं वीर वधादपि पलाशिनाम् ॥३५॥

प्रकाशमानामिति । हे वीर आकाशे प्रकाशमानां चञ्चलां विद्युतं विनिपातय पतितां कुरु । नन्वनेनापि किं लभ्यत इत्याशङ्क्याह । श्लाघनीयमिति । इदं चञ्चलाविनिपातनं ताटकाया विनिपातनादपि श्लाघनीयं विद्युन्निपातनस्य स्वेनापि अकरणत्वात् तत्करणे तवाधिकप्रतापलाभ इति भावः ॥३५॥

गर्जितो दुर्जयानेतान् बलाज्जहि बलाहकान् ।
श्लाघनीयमिदं वीर वधादपि पलाशिनाम् ॥३६॥

गर्जित इति । हे वीर गर्जितः गर्जितानि कुर्वतः सिंहनादकारिण इति च ध्वन्यते । दुर्जयान् एतान् बलाहकान् मेघान् बलात् बलात्कारात् जहि संहर । नन्वनेन किं लभ्यत इत्याशङ्क्याह श्लाघनीयमिति । इदं बलाहकसंहरणं पलाशिनां राक्षसानां वधादपि श्लाघनीयम् । मेघसंहरणस्य तवाधिकप्रतापलाभ इति भावः ॥३६॥

इत्थं विप्रलपन्नीत्वा राघवो विरहातुरः ।
वासरान्नीलजीमूतधूसरानिदमब्रवीत् ॥३७॥

एवं विरहवेदनां वर्णयित्वा शरदृतुं वर्णयितुं पातनिकामारचयति—

इत्थमिति । विरहातुरो राघवो रामः इत्थम् उक्तेन प्रकारेण विप्रलपन् सनीलजीमूतैः कालमेघैः धूसरान् धूसरवर्णान् वासरान् वर्षावासरान् इत्यर्थः, नीत्वा निर्गमय्य इत्थं वक्ष्यमाणं वचनम् अब्रवीत् ॥३७॥

सौमित्र नीलजीमूतमलिनाकाशमार्जनी ।
नदी कतकधूलीव कापि वेला विजृम्भते ॥३८॥

पञ्चभिः श्लोकैः शरदृतुं वर्णयन् वचनप्रकारमेवाह—

**सौमित्र इति ।** हे सौमित्र नीलजीमूतैः मलिनस्य आकाशस्य मार्जनी शोधनी कापि वेला समयः शरत्काल इत्यर्थः । नदीनां कतकस्य जलशोधक-बीजविशेषस्य धूलीव रेणुभिरिव विजृम्भते । अत्र शरत्कालस्य कतकधूल्युप-मानेन नदीनिर्मलीकरणसामर्थ्यं व्यज्यत इत्यलङ्कारे वस्तुध्वनिः ॥३८॥

**पान्थान् प्रहरता पुष्पधनुषा फालधारितः ।**
**असृग्विशेषक इव बन्धूकं भाति नूतनम् ॥३९॥**

**पान्थानिति ।** नूतनं नव्यं बन्धूकं बन्धुजीव कुसुमं पान्थान् विरहिणः प्रहरता पुष्पधनुषा मन्मथेन फाले ललाटे धारितः असृग्विशेषक इव रक्ततिलक इव भाति । अत्र लोके अतिद्वेषी पुरुषः शत्रुं हत्वा तदीयरक्तेन ललाटे तिलकं करोतीति लौकिकीरीतिरनुसन्धेया ॥३९॥

**मैथिलीं हरतः पङ्क्तिकण्ठस्य हृदयं विना ।**
**न क्वापि भुवि सौमित्र पङ्कशङ्का प्रवर्तते ॥४०॥**

[ **मैथिलीमिति ।** ] हे सौमित्र मैथिलीं हरतः पङ्क्तिकण्ठस्य रावणस्य हृदयं विना भुवि क्वापि पङ्कस्य शङ्का न प्रवर्तते येन रावणहृदयस्थः पापरूपपङ्क एव न निवृत्तः तदितरो भूपङ्कः सर्वोऽपि निवृत्त एवेति भावः ॥४०॥

**जृम्भते गगनालम्बा कापि कादम्बिनी सिता ।**
**अन्वाकाशनदीकूलं पुष्पितेव शराटवी ॥४१॥**

**जृम्भत इति ।** गगनम् आलम्बं यस्याः सा तथोक्ता सिता शुभ्रकापि कादम्बिनी मेघमाला, आकाशनदीकूलं समीप इत्यर्थः । पुष्पिता सञ्जातपुष्पा शराटवी विजृम्भते शोभते ॥४१॥

**जगतामुपकाराय शोभते मित्रमण्डलम् ।**
**तथापि वर्तते नेह वशे मे मित्रमण्डलम् ॥४२॥**

**जगतामिति ।** मित्रमण्डलं सूर्यमण्डलं, सुहृन्मण्डलमिति च प्रतीयते ।

जगतामुपकाराय शोभते यद्यपीति शेषः। तथापि इह शरत्काले मित्रमण्डलं सुग्रीवादिसुहृन्मण्डलं सूर्यमण्डलमिति च प्रतीयते। मे वशे न प्रवर्तते। विरोधाभासालङ्कारः ॥४२॥

बन्धुजीवप्रधामेत्य शरत्कालेऽपि सङ्गते।
विचित्रं नहि सुग्रीवो विकासामोदमश्नुते ॥४३॥

**बन्धुजीवेति**। सुग्रीवः शरत्काल सङ्गते सति बन्धून् जीवयतीति बन्धुजीवः बन्धुजीव इति प्रधां बन्धूककुसुममिति प्रसिद्धिः चेति गम्यते। एत्यापि प्राप्त्या विकाशेन नगराज्यलाभेन आमोदं सन्तोषं विकासकृतसौगन्ध्यं च नाश्नुते। विचित्रं हि आश्चर्यं हि बन्धुजीवस्य शरत्काले विकाससम्भवात् तस्य तदानीं तदभावे वैचित्र्यमिति भावः ॥४३॥

तारया योगमत्तस्य गर्वमस्य गिराप्तया।
स्फारया योपमग्नस्य सर्वमस्य करालया ॥४४॥

**तारयेति**। तारया योगेन सङ्गमेन मत्तस्य अत एव अये शुभावहविधौ उपमग्नस्य आसक्तस्यास्य सुग्रीवस्य सर्वं गर्वं करालया भीषणया स्फारया भूयस्या आप्तया गिरा वाचा अस्य निराकुरु। विभीषिकासान्त्वनाभ्यां सुग्रीवं वशीकुर्वित्यर्थः ॥४४॥

इत्युक्तश्चरणन्यासैः कम्पयन् धरणीतलम्।
आगत्य लक्ष्मणः क्रोधात्सुग्रीवमिदमब्रवीत् ॥४५॥

**इतीति**। इत्यनेन प्रकारेण उक्तः रामेण भाषितः लक्ष्मणः क्रोधाद्धरणीतलं चरणन्यासैः पादविक्षेपैः कम्पयन् सन् आगत्य सुग्रीवम् इदं वक्ष्यमाणम् अब्रवीत् ॥४५॥

रुमालावण्यसङ्क्रान्तमानसस्य प्लवङ्गम।
कथंङ्कारं तवालापमाधुर्यं सुस्थिरं भवेत् ॥४६॥

**रुमेति**। हे प्लवङ्गम कपे सुग्रीव रुमाया रुमानाम्नो भार्यायाः लावण्ये सौन्दर्ये सङ्क्रान्तं मानसं यस्य स तथोक्तः। तस्य लवणाकरगतलवण-

संलग्नान्तःकरणस्येति गम्यते। तवालापमाधुर्यं वचनमाधुर्यं कथंङ्कारं सुस्थिरं भवेत्। न कथञ्चिदित्यर्थः। कामिनीसम्भोगनिरतस्य तव वाङ्माधुर्यं दूरनिरस्तमिति वाच्यार्थः। अन्तःकरणे लवणरसकलिते वचसि माधुर्यं न प्रसरत्येव। यदेव मनसा ध्यायति तदेव वाचा वदतीति न्यायाद् गम्योऽर्थः ।।४६।।

**अनलं मित्रभावस्य स्मर वानर साक्षिणम्।**
**तं च दारशरथेर्वालिदाहकं सायकानलम् ।।४७।।**

**अनलमिति।** हे वानर मित्रभावस्य राममैत्र्याः साक्षिणम् अनलं स्मर। स्मृत्वा रूढं कुरु। अग्निसाक्षिकं सख्यं न त्याज्यमित्यर्थः। बालिनो दाहकं तं दाशरथेः सायकानलं वाणाग्निं च स्मर। सख्यत्यागैः बालिनो या दशा सैव तवापि शीघ्रमेवागमिष्यतीति भावः ।।४७।।

**रिपुहा पुरि यो जेयोऽमेयो मे विभुको भुवि।**
**यजतं जय सम्भासं वाचा वा लग मागल ।।४८।।**

**(प्रतिलोमोत्तरम्)**

**रिपुहेति।** यन्मे विभुरेव विभुकः मत्स्वामी राम इत्यर्थः। स्वार्थे क-प्रत्ययः। रिपून् हन्तीति रिपुहा सकलशत्रुसंहारी 'अन्येभ्योऽपि दृश्यत[1]' इति अगत्यर्थाच्छन्दसि युच्[2]प्रत्ययः। अत एवाजेयः अन्यैर्जेतुमशक्यः अत एव अमेयः अपरिच्छिन्नमहिमा च भवतीति शेषः। सम्भासं समीचीनतेजसं तं तादृशं रामं यज पूजय। अतएव पुरि किष्किन्धायां जय जयशाली भव। वाचा वा लग लग्नो भव। लगतेर्लोट्। सत्यवचने वा स्थातव्यमिति अर्थः। मा गल सत्यवचनाद् भ्रष्टो मा भव। अनुलोमम् ।।४८।।

**लग मागल वाचा सम्भासं यज तं यज।**
**विभुको भुवि मेयोऽमेयो जेयो रिपुहा पुरि ।।४९।।**

**लगेति।** पूर्वश्लोकार्थं एवात्राप्यनुसन्धेयः। प्रतिलोमोत्तरम् ।।४९।।

---

१—अष्टाध्यायी ३।३।१३०

२—दप्रियहणाद्दन्तं तर्क: 'क'

**शाशशेशाशुशाश्शाशे शशे शाशि शिशो शश ।**
**शशाशशं शशशश शाशाशा शशशो शिशि ॥५०॥**

*शाशशेश । आशुशाः । शाशे । शशेशाशि शिशो शश ।*
*शशाश । शम् । शश । शश । शाश । आशा शशशः । अशिशिः ।*

(एकाक्षरी)

शाशेति । शाशशेश । आशुशाः शाशे । शशेशाशी शिशो । शश । शशाशशम् । शशशश । श आशा शाशशशः । अशिशिः इति पदविभागः । शिशोशश बालशशकल्पः, शाश्यन्ते पोष्यन्ते इति शाशशाः प्लवङ्गाः, तेषामीश शाशशेश हे सुग्रीव सुतगतौ शशेशं चन्द्रम् अश्नातीति शशेशाशी राहुः राहुकल्प इत्यर्थः । आशुशास्ते शिक्षयतीत्याशुशाः रामः शशाशं त्वयि विषये संहारार्थंसुतं चकारेति सिद्धवत्कथनं, सुग्रीव विभीषिकार्थं शशतेर्लिट् । तर्हीतः परं मया किं कर्तव्यमित्याशङ्क्याह-शशीति त्वमिति शेषः । आशासु दिक्षु आशा इच्छतां शशति प्राप्नोतीत्याशाशशः सन् अशिं भुञ्जिक्रियां शृणाति हिनस्तीत्यशीशिः भोजनरहितः सन्नित्यर्थः । शं सुखेन शश शश शश सुतैः पलायस्व पलायस्व पलायस्व इति त्रिर्वचनं सम्भ्रमोदीरितमिति मन्तव्यम् । शाशशेत्यत्र शशतेर्यङन्तात् पचाद्यत् प्रत्ययः । आशुशा इत्यत्र शास्तेः क्वि[प्]प्रत्ययः अशिशिरित्यत्र शॄहिं हिंसायामित्यस्माद्धातोः क्विप् प्रत्ययः । एकाक्षरी ॥५०॥

**इत्युक्तस्तेन चकितः सुग्रीवो रामसन्निधौ ।**
**प्रेषयामास कीशेन्द्रानाहूतानखिला दिशः ॥५१॥**

इतीति । इति उक्तेन प्रकारेण तेन लक्ष्मणेन उक्तः भाषितः सुग्रीवः चकितः भीतः सन् रामसन्निधौ स्थित्वेति शेषः । आहूतान् दूतैराकारितान् कीशेन्द्रान् कपीश्वरान् अखिलाः दिशः प्रति प्रेषयामाम सीतामार्ग[णाय] प्रेषितवान् ॥५१॥

**कार्यसिद्धिं विनिश्चित्य ददौ रामः स्वमुद्रिकाम् ।**
**पौलस्त्यनाशनायैव बलिने वायुसूनवे ॥५२॥**

**कार्येति** । रामः कार्यसिद्धिं विनिश्चित्य हनूमतैव कार्यं सेत्स्यतीति [वि] निश्चित्येत्यर्थः स्वकीयमुद्रिकां ऊर्मिकां पौलस्त्यस्य रावणस्य नाशनायैव वधार्थमिव बलिने बलाढ्याय वायुसूनवे हनूमते ददौ दत्तवान् । यथा लोके राजा स्वमुद्रिकां दत्वा स्वाभीष्टपुरुषमपराधिनो वधाय आज्ञापयति, एवं रामोऽपि स्वमुद्रिकां हनूमते दत्वा रावणवधा[या]ज्ञापितवानित्युत्प्रेक्षा ।।५२।।

**गृहीत्वाञ्जलिना मुद्रां कार्यसिद्धिमिवापराम् ।**
**आञ्जनेयस्सतारेयो दक्षिणां दिशमाययौ ।।५३।।**

**गृहीत्वेति** । आञ्जनेयः हनूमान् अपराम् अन्यां कार्यसिद्धिमिव मुद्रिकाम् अञ्जलिना गृहीत्वा करस्थां कृत्वेत्यर्थः सतारेयेन अङ्गदेन सहितः सन् दक्षिणां दिशम् आययौ आयातवान् ।।५३।।

**मार्गमाणैर्वने सीतां वानरैः कामरूपिभिः ।**
**रावणोऽयमिति ज्ञात्वा हता इन्द्रस्य शत्रवः ।।५४।।**

**मार्गमाणैरिति** । इन्द्रस्य शत्रवः अन्ये राक्षसाः सीतां मार्गमाणैः विचिन्वद्भिः कामरूपिभिः वानरैः कर्तृभिः अयं रावण इति ज्ञात्वा मत्वा हताः हिंसिताः हन्तेः कर्मणि क्तः ।।५४।।

**वानरालिपिपासार्ता जगाहे नगगह्वरम् ।**
**वनपालिष्वपावार्ता न गाधं नदगह्वरम् ।।५५।।**

**वानरेति** । अपगता अवार्ता अपकीर्तिर्यस्याः सा अपावार्ता वानराणामालिः पङ्क्तिः वनानां पालिषु समूहेषु पिपासया सीतामार्गण-श्रमजनिततृष्णया आर्ता पीडिता सतीति न गाधं गभीरं नदात् गच्छतीति प्राप्नोतीति नदगह्वरं श्रेष्ठं नगगह्वरं पर्वतगुहां जगाहे प्रविष्टा गाहतेर्लिट् । गोमूत्रिकाबन्धः ।।५५।।

**चिरं तत्र परिश्रान्तान् कपीन् काचन कन्दरात् ।**
**ब्रह्मविद्येव संसारबिलाज्जीवानतारयत् ।।५६।।**

**चिरमिति ।** काचन स्वयम्प्रभा नाम काचित्स्त्री तत्र गुहायां चिरं परिश्रान्तान् कपीन् कन्दराद् गुहातः सकाशात् ब्रह्मविद्या अखण्ड ब्रह्माकारा अन्तःकरण वृत्तिः संसार एव बिलं तस्मात् जीवानिवातारयत् तारितवती । त्रातात्लङ् ।।५६।।

**अपारा दक्षिणाम्भोधिवेला प्लवगसेनया ।**
**भूपालदक्षिणाराधि लोलालं वर्चसेनया ।।५७।।**

**(स एव बन्धः)**

**अपारेति ।** अनया प्लवगसेनया अपारा पाररहिता भुवः भूमेः पाले पालने दक्षिणो निपुणो महादव (?) मर्यादात्वेति भावः । लोला चक्राचला वानरपादाघातैरिति भावः । दक्षिणाम्भोधेर्वेला वर्चसे तेजसे अलम् अन्यर्थम् आराधि आराधिता सेवितेत्यर्थः । स एव बन्धः ।।५७।।

**सागरं चारुलोकेशं कृतमापन्नवारणम् ।**
**सागरं चारुलोके शं कृतमापन्नवारणम् ।।५८।।**

*सागरम् । चारुलोकेशम् । कृतमापम् । नवारणम् ।*
*सा । अगरं । च आलुलोके । शं कृतम् । आपन्नवारणम् ।*

**(अर्धयमकम्)**

**सेति ।** सा वानरसेना चानेतुर्लोकेशो विष्णुर्यस्मिन् सः चारुः लोकेशः । तन्त्रोक्तः[1] मा[या]याः लक्ष्म्याः आपः प्राप्तिर्येन स कृतमापः तम्, लक्ष्मीजनकत्वादिति भावः । शं करोतीति शंकृत् तम, आपन्ना प्राप्ताः वारणाः जलगजाः येन सः आपन्नवारणः तं[2] सागरं समुद्रं आलुलोके लोकितवती । अर्धयमकम् ।।५८।।

---

१—तन्त्रेतः, 'क'
२—तले, 'क'

यः फेनैः जनयित्वेन्दुं तारान् प्रजनयन्निव ।
विष्णोः शयनभावेन पुष्पाचित इवा बभौ ।।५९।।

पञ्चभिः श्लोकैः समुद्रं वर्णयति—

य इत्यादि । यः समुद्रफेनैः हिण्डीरैः हेतुभिः इन्दुं जनयित्वा ताराः नक्षत्राणि प्रजनयन्निव विष्णोः शयनभावेन तुल्यत्वेन पुष्पैः आचित इव व्याप्त इव आबभौ शोभितवान् । अत्र फेनानां तारात्वेन शयनगतपुष्पत्वेन चोत्प्रेक्षणादुत्प्रेक्षालङ्कारः ।।५९।।

आवर्तपतितभ्रान्ता यस्मिन् सलिलमानुषाः ।
तरङ्गमर्दलारावैरनृत्यन्निव सर्वतः ।।६०।।

आवर्तेति । यस्मिन् समुद्रे आवर्तेषु जलभ्रमिषु पतिताः ते च ते भ्रान्ताश्च सलिलमानुषा जलमनुष्याः तरङ्गा एव मर्दला मृदङ्गाः तेषाम् आरावैः ध्वनिभिः सर्वतः समन्तात् अनृत्यन्निव नृत्यवन्त इव । तद्गतविष्णु-प्रीत्यर्थमिति भावः ।।६०।।

मुरारिशयने यत्र मेख(घ)खण्डाः पिपासवः ।
नीलपटकृतप्रोद्यदुपधानश्रियं दधुः ।।६१।।[1]

आहवे गजनक्राणां प्रेरितानां पयोनरैः ।
मग्नाद्रिशिखराभोगा यत्राभूवन् वरण्डकाः ।।६२।।

आहव इति । यत्र समुद्रे मग्नाद्रीणां मग्नशैलानां शिखरभागाः शृङ्गप्रदेशाः पयोनरैः जलमनुष्यैः अधोरणीभूतैरिति भावः । प्रेरितानां गजनक्राणां मातङ्गाकारयादसाम् आहवे परस्य युद्धे वरण्डकाः मध्यमभित्तयः अभूवन् । अत्र लोके मध्यमभित्तिं कृत्वा गजान् योधयन्तीति लौकिकीरीतिरनुसन्धेया ।।६२।।

---

१—श्लोकस्यास्य टीका दैववशान्नोपलब्धा ।

आरणद्भिः परीतो यो विहङ्गैः सारसादिभिः ।
धरणीमेखलात्वेन किङ्किणीभिरिवाकुलः ॥६३॥

आरणद्भिरिति । यः समुद्रः आरणद्भिः रवद्भिः सारसाः आदिर्येषां ते सारसादयः तैर्विहङ्गैः पक्षिभिः परितः व्याप्तः सन् धरण्याः भूमेः मेखलात्वेन किङ्किणीभिः क्षुद्रघण्टाभिः आवृत इव व्याप्त इव स्थित इत्यर्थः । अत्र कूजज्जलपक्षिणां भूमेखलाभूतसमुद्रस्थापितकिङ्किणीत्वेनोत्प्रेक्षणादुत्प्रेक्षालङ्कारः ॥६३॥

तस्य पारे प्लवङ्गेन्द्राः समयातिक्रमातुराः ।
दर्भानास्तीर्य ते रत्नगर्भायां समुपाविशत् ॥६४॥

तस्येति । प्लवङ्गेन्द्रा हनूमदादयः कपीश्वराः तस्य समुद्रस्य पारे ........ (?) आतुरा : पीडितास्सन्तः रत्नगर्भायां भुवि दर्भानास्तीर्यं आच्छाद्य समुपाविशन् समुपविष्टाः प्रायोपवेशं चक्रुरित्यर्थः ॥६४॥

तदा सम्पातिना नाम शनैः सम्पातिना विना ।
सहसाज्ञापिता सीता राक्षसाज्ञापिता पुरि ॥६५॥

[तदेति । ] तदा प्रायोपवेशकाले शनैर्मन्दं सम्पातः समीपगमनम् अस्यास्तीति शनैः सम्पातिना तस्य पक्षशून्यत्वादिति भावः । सम्पातिनामपक्ष-(पक्षिणा) कर्त्रा पुरि लङ्कायां राक्षसस्य रावणस्य आज्ञाम् इयमशोकवनिकायां निरोद्धव्येत्याज्ञाम् आपिता प्रापिता सीता ज्ञापिता । लङ्कायामस्तीति निवेदयित्वेत्यर्थः । चतुरक्षरमध्ययमकम् ॥६५॥

कपिगणोऽथ निशम्य कृतोत्सवं
द्विजवचो जवचोदितविक्रमः ॥
अजनि धीररवो लवणाम्बुधिं ।
स सलिलं सलिलङ्घयिषुस्तदा ॥६६॥

कपीति । अथानन्तरं सः कपिगणः कृतः उत्सवो येन तत्तथोक्तं, द्विजवचः सम्पातिवाक्यं निशम्य श्रुत्वा तदा तत्काले वने यः जवेन वेगेन चोदितः प्रेरितः विक्रमः पराक्रमो यस्य स तथोक्तः । धीररवः गम्भीरध्वनिः सन् ससलिलं सजलं लवणाम्बुधिं लङ्घयितुमिच्छुः लिलङ्घयिषुः अजनि जातः ॥६६॥

अकुशलानधिगम्य हरीश्वरान्
लवणसागरलङ्घनकर्मणि ।
नियुयुजे बहुलादृतिजाम्बवान्
पवनजं वनजङ्गमशेखरम् ॥६७॥

अकुशलानिति । जाम्बवान् हरीश्वरान् अङ्गदादीन् कपीश्वरान् लवणसागरस्य लङ्घनकर्मणि अकुशलानदक्षानधिगम्य ज्ञात्वा वनजङ्गमानां वनेचराणां कपीनां शेखरं श्रेष्ठं पवनजं हनुमन्तं बहुलाधिकारा आदृतिरादरो यस्मिन् कर्मणि तत्तथा नियुयुजे नियुक्तवान् ॥६७॥

वक्त्रे दधद्विकचपाटलपद्मलक्ष्मीं
रत्नाकरस्य तरणाय तदा हनूमान् ।
आरोहति स्म शिखरीन्द्रवरं महेन्द्रं
पूषोदयाचलमिवाम्बरलङ्घनाय ॥६८॥

इति श्रीचित्रबन्धरामायणे वेङ्कटेश्वरेण विरचिता
किष्किन्धाकाण्डकथा सम्पूर्णा चतुर्थः सर्गः ॥४॥

वक्त्र इति । हनुमान् तदा नियोगसमये वक्त्रे विकचानां पाटलानां पद्मानां लक्ष्मीं दधत् दधानः सन्, अनेन हर्षादयो व्यज्यते । रत्नाकरस्य समुद्रस्य तरणाय शिखरीन्द्राणां पर्वतश्रेष्ठानां पर्वतश्रेष्ठं महेन्द्रं पूषा सूर्यः अम्बरस्य आकाशस्य लङ्घनाय उदयाचलमिव आरोहति स्म आरूढवान् । रोहतेर्लट् । स्मेति भूते लट् । उपमालङ्कारः ॥६८॥

इति श्रीचरकूरिकोण्डुभट्टोपाध्यायतनयश्रीयज्ञनारायण-
भट्टविरचितायां चित्रबन्धरामायणव्याख्यायां चतुर्थः सर्गः ॥

## पञ्चमः सर्गः

यथा रात्रिञ्चरेशस्य शिरश्शैलस्य शेखरम् ।
अङ्घ्रिणाताडयद्ग्रस्तलताकेशं किलानिलिः[1] ॥१॥

(निरोष्ठ्यम्)

यदे(थे)ति । अनिलस्यापत्यं पुमानानिलिः हनूमान्, ग्रस्तैः गणितां केशा इव यस्य तत्तथोक्तम् । अन्यत्र ग्रस्तलता लतासदृशकेशाः[2], शैलस्य महेन्द्रस्य शेखरं शिख[रं] .... .... (?) राक्षसानां केशस्य रावणस्य शिरो यदा(था) शीत इव अङ्घ्रिणा पादेन अताडयत् ताडितवान् । उपमालङ्कारः । निरोष्ठ्यम् ॥१॥

वारं वारं वरारावं वार्वरं रविवाररः ।
वारं वारं वरिविरो[3] रुराव[4] विरिवावरः ॥२॥

*वारं वारम् । वरारावम् । वार्वरम् । रविवाररः ।*
*वारं वारम्[5] । वरिविरः । रुराव । विः । इव । अवरः ॥*

(द्व्यक्षरी)

---

१—तालयं स्रस्तु, 'ख'
२—शर, 'ख'
३—वरिरिरो, 'ख'
४—रुवाव, 'ख'
५—वारवारम्, 'ख'

वारमिति। रवेः सूर्यस्य वारं निवारणम् राति आददाति इति रविवारकः(रः) सूर्यंको (तो)दक इत्यर्थः। सूर्यमण्डलग्रासकाल इति भावः। वराः ब्रह्मेन्द्रादिदत्ता अस्य सन्तीति वरीवीरः हनूमानित्यर्थः। वरः श्रेष्ठः आरावो यस्य सः तम्। पार्श्वम् अम्बुधिपतिं(तीरं) समुद्रं वारं वारं वारयित्वा वारयित्वा समुद्रध्वनिमाच्छाद्येत्यर्थः न विद्यते वरः यस्मात् सः अवरः सर्वश्रेष्ठः। विरि[व] गरुत्मान् इवेत्यर्थः। वारं वारं बहु[1]वारं रुराव शब्दितवान्। अल्पहेनं कृतवानित्यर्थः। द्व्यक्षरी ॥२॥

निविभ्राणन्[2] श्रुतिप्रान्तौ[3] चालयन् बालमायतम्।
स प्रसारितदोर्दण्डो लिलङ्घे लवणाम्बुधिम् ॥३॥

[नि]विभ्राण[न्]इति। स हनूमान् श्रुतिप्रान्तौ कर्णाञ्चले निविभ्राण[न्] उन्नमयन् आयतं दीर्घं बालं लाङ्गूलं चालयन् कम्प[य]न् प्रसारितौ दोर्दण्डौ[4] येन सः तथोक्तः, लवणाम्बुधिं लिलङ्घे लङ्घितवान्। अत्र स्वभावोक्तिरलङ्कारः ॥३॥

री(रि)रारि लालालीलूलो लोलुलोलो लुलो[5]ऽररम्।
लोलाली(लि)लालीलालीरो ली[6]लोल्लालं लिला(ललौ) ललः ॥४॥

*री(रि)रारि लाला लीलूलः। लोलुलोलो लुलः। अररम्। लोलाली(लि)लालि। इलालीरः। ली[7]लोल्लालम्। लिला(ललौ) लल॥*

(एकाक्षरी)

---

१—भव, 'ख'

२—नीलः भ्राणन्, 'क'

३—भ्रान्तौ, 'क'

४—दोर्दनि, 'ख'

५—लुरा, 'ख'

६—लिलो, 'ख'

७—लिलो, 'ख'

**रिरेति**[१]। रिरारि लालालिलूलः लोलुलः लु(लो)लुलः अररम्। लोलालिलालि इलालीरो लिलोल्लारं(लं) ललौ ललं (ललः)। रिःगतिः ताम् राति आददातीति रिराः। ते च ते अरयश्च प्राप्तशत्रव इत्यर्थः। रीङ् गतावित्यस्माद्धातोः क्विपि सति, रा आदाने इत्यस्माद्धातो'रातोऽनुपसर्गे [क],[२] इति कप्रत्यये च कृते रिरशब्दः निष्पन्नः। तेषां लाला जिह्वाजलानि तासामाशीः परम्परा तस्याः लुः छेदनक्रिया लुञ्ि छेदन इत्यस्माद्धातोः क्विप्प्रत्ययः। तां लाति इति रिरारि लालालिलूलः। भीत्युत्पादनेन शत्रुलालाच्छेदक इति भावः। लोलुललः अभीक्ष्णं चञ्चलं लुलसंचलन इत्यस्माद्धातोर्यवन्तात् चेद्यचि कृते लोलुलशब्दो निष्पन्नः। अस्य द्विर्भावम्। अररं मित्रवर्गस्य कपाटकल्प इत्यर्थः। लोलश्चासावलिश्च[३] लोलालिः चञ्चलभृङ्गः तद्वत् ललतीति लोलालिलालि। इला भूमिः तस्यां लिः लयनक्रिया तां रातीति इलालीरः। लङ्घनसमये भुव्येकान्तलीन इत्यर्थः। लिंलिलयने[४] इत्यस्माद्धातोर्भावे शिवञिति। ललतीति ललः। चलितः स हनूमान् लीलया उल्लालं उल्ललनं अल्ल[लन]मित्यर्थः। ललौ आदत्तवान्। समुद्रं लङ्घितवानित्यर्थः। रलयोरभेदन्यायेन एकाक्षरीति बोद्धव्यम्॥४॥

**तस्य वेगादनुत्पत्य भूरुहाः क्षितिनन्दनीम्।**
**विचेतुमिव पाताले निपेतुस्सागराम्भसि॥५॥**

**तस्येति**। भुवि रोहन्तीति भूरुहाः वृक्षाः तस्य हनूमतो वेगादनुत्पत्य अनुक्षितिनन्दनीं सीतां 'करणाधिकरणयोश्च[५]' इति करणार्थे ल्युट्। 'टिड्ढाणञ्'[६] इत्यादिना ङीप्। पाताले विचेतुमिव मार्गितुमिव स्वेषामपि क्षितिजत्वाविशेषात् सोदरीमार्गणमुचितमेवेति भावः। .... .... (?) [पाता]ले अम्भसि निपेतुः पतिताः। पतेर्लिट्॥५॥

---

१— रेरेति, 'ख'

२—अष्टाध्यायी (३।२।३)

३—लोलश्च आसु वलिश्च, 'ख'

४—लिं लिलयिल, 'ख'

५—अष्टाध्यायी (३।३।१७०)

६—अष्टाध्यायी (४।१।१५)

महेन्द्रवैरिमैनाको महेन्द्रगिरिमर्दनम् ।
मारुतिं पूजयाञ्चक्रे योग्यो योग्येन पूज्यते ॥६॥

महेन्द्रस्येति । महेन्द्रस्य देवेन्द्रस्य[1]........

सुरसा रारास(रसा) लासा सरसा सरसी(सि) सरा ।
रसालसा सुरसा सा ससार सुरसालसा ॥७॥

*सुरसा रारास लासा । सरसा। सरसी[2] सरा ।*
*रसालसा । सुर[3]सा सा । ससार । सुरसा । अलसा ।*

(द्व्यक्षरी)

दिवा[4]दिदेवदा वेवावेदि दैवे वदावदे ।
देवी विवादाद्वा देवे देवा विदिदिवुर्दिवि ॥८॥

*दिवा । आदिदेवदा । वेवावेदि दैवे । वदावदे ।*
*देवी विवादात् । वा । देवे । देवाः । विदिदिवुः : दिवि ।*

सिंहिकादारणोद्भूतशोणिता[5]लेपपाटलः ।
जगामान्धे[6] परम्पारं लङ्कादाहीव[7] पावकः ॥९॥

विलङ्घ्य जलधिं तस्मिन् सुवेलस्थं पराम्बुधिम् ।
नूनं विलङ्घितुं[8] भास्वानारुरोह पराचलम् ॥१०॥

---

१—अतः परं टीका अनुपलब्धा ।
२—सरसि, 'ख'
३—सार, 'क'
४—देवा, 'क'
५—शोणातालेपपाडलः, 'क'
६—जगामाद्दे, 'ख'
७—दाहिव, 'क'
८—विलङ्घितं, 'क'

विधुस्सन्ध्यातपालेपपाटला वनपादपाः ।
हनूमदागमामोदात्सद्यः पल्लविता इव ॥११॥

सायंकाले दधौ स्फारं नभो माणिक्यमण्डलम् ।
नटन्न(न्म)हानटाटोपगलन्नूपुरसम्भ्रमम् ॥१२॥

ननिलं नलिनं नालं लोलनालं ललानिलम् ।
नालानं नालिनोऽलूनं नलिनं ललनाननम् ॥१३॥
*ननिलम् । नलिनम् । नालं लोलनालम् । ललानिलम् ।*
*न आलानम् । न । अलिनः । अलूनम् । नलिनम् । ललनाननम् ।*
(द्व्यक्षरी)

तदानीं पाटलीभूता जीमूता विरराजिरे ।
सन्ध्यादुर्गामुदे दत्ता बलिमांसोत्करा इव ॥१४॥

तरुरातततरां तीरे तारतीति रतं रुतम् ।
तारारातौ तरीरेतं ततं तरति तं ततः ॥१५॥
*तरुः[1] । आतततरां[2] तीरे । तारतीति रतम् । रुतम् ।*
*तारा रातौ । तरीः । एतम् । ततम् । तरति । तम् । ततः ॥*
(द्व्यक्षरी)

नलिन्यः संकुचत्पद्मजठरालग्नषट्पदाः ।
वल्लभेऽस्तङ्गते स्वीये विषं घोरमिवावमुः ॥१६॥

आललम्बेऽम्बराभोगः[3] सन्ध्यारागेण[4] रञ्जितः ।
कुसुम्भकुथसंस्तीर्णकुञ्जराधिपडम्बरम् ॥१७॥

---

१—रुरू, 'क'
२—आतततां, 'क'
३—वराभोगः, 'ख'
४—रागानरञ्जितः, 'क'

महत्तमतमस्तोम[1]सङ्कुलं धरणीतलम् ।
उद्रिक्तशम्बरारातिवह्निदग्धमिवाबभौ ॥१८॥

नभस्सरः[2] कैरवाभा निशावल्लीसुमोपमाः ।
सन्ध्याग्निजा बभुस्तुङ्गाः स्फुल्लिङ्गा इव तारकाः ॥१९॥

स्थूलसूक्ष्मतमाकारतारकानिकराकुला ।
द्यौः स्म विभ्राजते मुक्तातोरणार्थेन चालनी ॥२०॥

तदानीं मारुतेर्ध्वान्तसन्तपातनुराबभौ ।
लङ्कायां मर्मरच्छायै वर्मणेव समावृता ॥२१॥

सप्रकारे तदा तस्मिन् प्राकारनिकटं गते ।
हनुमति स्वयं लङ्का निरातङ्का समाययौ ॥२२॥

दामोद्दामा[3] मन्दमन्दमादमादमदो[4] मदम् ।
मुमोदादिदमामोदिमाममादादिमो मदः ॥२३॥

दामोद्दामा[5] । मन्दमन्दम् । आदम् । आदम् । अदो मदम् ।
मुमोद । आदि [द][6] मामोदि । मा । ममाद । आदिमः । मदः ।

(द्व्यक्षरी)

तनूकृततनुर्लङ्कां जगाहे वायुनन्दनः ।
अरण्यानिमिवस्वल्पः (?) कीलो दावाशुशुक्षणेः ॥२४॥

---

१—तोमं, 'ख'
२—सेक, 'ख'
३—दामाद्दामा, 'क'
४—मन्दो, 'क'
५—दामाद्दामा, 'क'
६—तमा, 'ख'

प्राचीं स्मो[1]ल्लासयतीन्दोरतिधीरमरीचयः ।
विजहार दिविप्राप्तरतिधीरमरीचयः ॥२५॥

*अति धीरमरीचयः । प्राप्तरतिधीः । अमरीचयः ।*

सुधांशुशकलं प्राच्यां प्रसभं प्रथमोदितम् ।
अनुचक्रे हरित्कान्ताकवरी केतकीदलम् ॥२६॥

उदभाद[2]प्रकाशार्थमरुणं शशिमण्डलम् ।
ततो नक्रैर्महाक्रूरैरर्ध[3]जग्धमिवाम्बुधौ ॥२७॥

करदीपैर्ज्वलैः कर्तुं साहाय्यमिव मारुतेः ।
सीतां विचेतुकामस्य प्रापदापूर्णचन्द्रमाः ॥२८॥

करकाकारकाकारि राकाकारः । कराकरः ।
किराकरकरः कारकारकः करकारकः ॥२९॥

*करकाकारकाकारि । राकाकारः । कराकरः ।*
*किराकरकरः । कारकारकः । करकारकः ॥*

(द्व्यक्षरी)

तस्य कीर्तिरिवान्यञ्च [त् ?]प्रतापोपगमारुणा ।
लङ्कायां वायुपुत्रस्य ववले बालचन्द्रिका ॥३०॥

स्वालग्नरजनीरामा रति[5]चिह्नाञ्जनोपमः ।
हृदीवरत्नसोऽदर्शि कलङ्कश्चन्द्रमण्डले ॥३१॥

---

१—स्मालल्सयन्तीन्दो, 'क'
२—उदनाद, 'ख'
३—रर्थ, 'क'
४—कीर्तिदिवान्पञ्च, ख'
५—रते, 'क'

प्रसारितां नभःपात्रे नव्योत्पलसुगन्धिताम् ।
सुरामिव निशाचर्यश्चकोर्यश्चन्द्रिकां पपुः ॥३२॥

निलीयमानोऽध्यारोहन्नवरोहन् क्वचित् क्वचित् ।
कर्णं दत्वा गिर[1]श्शृण्वंश्चचार पुरि मारुतिः ॥३३॥

हरिराहारराहो[2]रिहारि हरिरहो हरः ।
हरिहाराहाररोहिहरी रह्वो रहो रिहो ॥३४॥

*हरिः । आहार राहोः । इह आरि हरिरहो हरः ।*
*हरि हारा हाररोहि हरिः रह्वो रहो रिहो[3] ॥*

(द्व्यक्षरी)

भणितं पुरि शुश्राव रणितं नूपुरस्य[4]सः ।
फणितं सुप्तयोधानां गणितं रावणौजसाम्[5] ॥३५॥

अत्रान्तरेऽमुनाश्रावि पुररक्षकभावितम् ।
जारचोरादिभीतायाः पटहे तमटध्वनिः[6] ॥३६॥

नगरे वीतसञ्चारे श्रुत्वा तु व्यचरद्धरिः ।
क्वचिद्विघटयन् बद्धकपाटं[7]क्वापि लङ्घयन्
पुररक्षिगदाकोणकिङ्किणीगणझङ्कृते ॥३७॥

---

१—गिरि, 'ख'

२—हीहहारे, 'क'

३—रिहाः, 'क'

४—न्यसः, 'क'

५—रावणाजसाम्, 'क'

६—ध्वनिम्, 'क'

७—क्वचि, 'क'

धीरो मुखरिताशान्तं जगाहे रावणालयम् ।
इहाविरलचित्राभे कामिनीयत्नकोमले ।
अहिष्टान्नसुतः सीतां विचिकाय महीसुताम् ॥३८॥

(अन्त्यपादगोपनम्)

तत्राप्य दृष्ट्वा वैदेही' भक्त्या सम्प्रार्थ्य देवताम् ।
हनूमान् रचितोद्योगो रावणोद्यानमाययौ ॥३९॥

तमाल[ति]मिर[1]व्रातश्यामलीभूतदिक्तटे ।
यत्र चम्पकपुष्पाणि प्रदीपाइव रेजिरे ॥४०॥

चम्पकावलिविद्युद्भिर्भृङ्गझङ्कृतिगर्जितैः ।
मरन्दवृष्ट्या यत्रासीद्वर्षालक्ष्मीरहर्निशम् ॥४१॥

यस्मिन्न केवलं सीताघटेन दशमौलिना ।
वसन्तश्रीरपि श्रेष्ठा रुरुधे सार्वकालिकी ॥४२॥

सूर्यामान[2](?)प्रसूनाढ्ये मारुताचञ्चलच्छदे ।
भृङ्गापीतमरन्दे च तत्राचारिन्मरुत्सुतः ॥४३॥

मार्गित्वा सर्वतस्सीतामारूढशिंशपातरुम् ।
वटस्थ इव रेजेऽसौ पुराणपुरुषोत्तमः ॥४४॥

मां दर्शयत वैदेहीमारादारामपादपाः ।
इति सम्प्रार्थयामास प्रयस्तोत्रो वनस्पतिः ॥४५॥

(वैदिकश्चतुर्थपादः)

---

१—त्रिमिर, 'क, ख'

२—सूर्याहान, 'ख'

ततः संवीक्ष्य वैदेहीं मुदितेऽस्मिन् दशाननः ।
सहारभूषणाढ्याभिर्वनिताभिस्तदन्तिकम् ॥४६॥

(क्रियागोपनम्)

निर्भर्त्स्य तस्मिन् वैदेहीं निर्गते तां निशाचरे ।
न्यवर्तयद् [1]भर्त्सयन्तीस्त्रिजटा स्वप्नवार्तया ॥४७॥

अथावकाशं सम्प्राप्य सीतां श्रु[ति]मनोहरैः ।
[2]साधु रामकथालापैर्मोदयामास मारुतिः ॥४८॥

सा पुरा स्वकुचालिप्तचन्दनाणुसुसङ्गताम्[3] ।
विशश्वासोर्मिकां दृष्ट्वा निशश्वास[4] तदर्पिताम् ॥४९॥

स्वविक्रमे संशयानां मैथिलीं मारुतात्मजः ।
अदर्शयन्निजं रूपं दुर्दर्शमपि निर्जरैः ॥५०॥

तारकाकिङ्किणीजालसङ्कुलायतमेखलम् ।
खरारिविजयस्तम्भाकारदोर्दण्डमण्डितम् ॥५१॥

तदङ्गवृद्धिमालोक्य सीता विस्मितमानसा ।
शशङ्के तत्क्षणे[5] लङ्काप्राकारस्य विदारणम् ॥५२॥

चूडामणिं गृहीत्वाथ सीतादत्तं समीरजः ।
वनभङ्गं कर्तुमैच्छन्नुमानभङ्गं च रक्षसाम् ॥५३॥

---

१—तर्सयन्ती, 'क'

२—सादु, 'ख'

३—सङ्गता, 'क'

४—निशश्वासवितदर्पिताम्, 'क'

५—रक्षणे, 'क'

कुपितेन प्लवङ्गानां कुञ्जरेण बलीयसाम् ।
रावणोद्यानमुत्फुल्लपुष्पमालाविराजितम् ॥५४॥

(क्रियागोपनम्)

राज्ञापि कुपितेनाथ[1] प्रेरितान् पञ्चसैनिकान् ।
हत्वानयत्पञ्चभावं सप्तमन्त्रिसुतानहो ॥५५॥
एत्य दृष्टं कटाक्षाभ्यां मृत्युरावणयोस्ततः ।
तस्मिन् रुषा शरानक्षस्सहास[2] वदनोज्ज्वले ॥ ॥५६॥

(क्रियागोपनम्)

भ्रमयित्वा चिरं पादे गृहीत्वा[3] भुजया कपिः[4] ।
अपास्यत [तदा] द्रोही(हि) वात्ययेव तृणं[5] लघु ॥५७॥
अक्षे हते जयं प्राप्तो विधाय परितोरणम् ।
तस्थौ युद्धाय सोऽनेकविधाय परितोरणम् ॥५८॥
विधाय । परितः । रणम् । अनेक विधाय । परितोरणम् ।
अमोख(घ)ब्रह्मवाक्येन मेघनादेन नादिना ।
नित्यमुक्तावबद्धो[6] हि स निन्ये रावणान्तिकम् ॥५९॥
उच्चबालासनासीनस्सोऽधः[7] कृत दशाननः ।
न्यवेदयदथात्मानं रामदूतमपेतभीः ॥६०॥

---

१—नाथे, 'क'
२—सहाह, 'क'
३—द्रुहिर्वा, 'क'
४—कपेः, 'क'
५—त्यणं (णुं), 'क'
६—मुक्तो वदो धीढ, 'क'
७—सेधः, 'क'

स पृष्टरामवृत्तान्तवनभङ्गप्रयोजनः ।
आचचक्षे सभामध्ये सूचितस्वामिपौरुषम् ।।६१।।

पूपोऽपि पूपपूः पाप पापपं [पापपः पि] पाः ।
पिपाः पपौ पपौ[1] पापं पापापापं पपौ पपौ ।।६२।।

पूपः । अपि । पूपपूः । पाप । पापपं पापपः । पिपाः ।
पिपाः पपौ पपौ । पापं पापापापम् । पपौ पपौ ।

(एकाक्षरी)

अधुनारिवधं यागं विधित्सौ वालिवैरिणि ।
[2]आनेतुमहमागच्छं लङ्कां[3] दशशिरःपशुम् ।।६३।।

मदीयं भुजकण्डूतिवारणाय वने लताः[4] ।
मया निकसितास्सद्यः पतिता धरणी तले ।।६४।।

इत्याकर्ण्य तदालापं कुपितो दशकन्धरः ।
दीपयामास लाङ्गूलं गतबुद्धिर्हनूमतः ।।६५।।

तेन दीप्तेन बालेन कपिलश्मश्रुशालिनाम् ।
प्रथमं रावणास्यानां [5]पर्यग्निकरणं कृतम् ।।६६।।

लङ्काबुभुक्षालोलस्य तल्लाङ्गूलहविर्भुजः ।
ययुः प्राणहविर्भावं[6] दशाननमहागृहाः ।।६७।।

---

१—पपौः पपौ, 'ख'

२—आनेतुमगमागच्छ, 'क'

३—लङ्का, 'क'

४—लता, 'क'

५—वर्यग्नि, 'क'

६—प्राणाहुतिर्भावं

सुवर्णसौधजालानि लङ्कायां दहतामुना ।
देवद्रव्यहरं सद्यः स्वर्णभस्म व्य[1]धीयत ।।६८।।

गृहाद्गृहाल्लङ्घयता दहता तेन[2] नादिना ।
अनुचक्रे पुरप्लोप[3]पुरारिस्फुटताण्डवः ।।६९।।

दूषितानि प्रतीदाह निस्सरद्धूमरेखया ।
नयनानि निलिम्पानां ययुरानन्दमद्भुतम्[4] ।।७०।।

एकशेषं वनं भङ्क्त्वा पुरं दग्ध्वैकशेषकम् ।
सारितौजोऽग्निकं सोऽब्धौ बालाग्निं निरवापयत् ।।७१।।

पुनराश्वास्य वैदेहीं लङ्घयित्वा स सागरम् ।
मुदितैर्वानरैस्साकं सुग्रीवाराममाययौ ।।७२।।

मधु पीत्वात्र[5] तैस्साकं वने वारितरक्षकः[6] ।
सीताकुशलवार्ताभिरेत्य राममजीवयत् ।।७३।।

सीताचूडामणेः प्राप्तिप्रीतं प्रति रघूत्तमम् ।
अङ्गदः कथयाञ्चक्रे मारुतेर्विक्रमक्रमम् ।।७४।।

विलङ्घ्य लीलया सिन्धुं द्विड्भिः सह हनूमता ।
रावणाराममुन्मूल्य राम लङ्कां व्यदह्यत ।।७५।।

---

१—वृधीयत, 'क'
२—लेन, 'क'
३—पुरुपे, 'क'
४—मन्द्रुतम्, 'क'
५—पीत्वात्रि, 'क'
६—वारितरीक्षक, 'क'

नामा त्रिस्फारिविध्या विविधजनक्रोशविद्राविगाना
विद्राविशक्रोद्यमिनि गजकटत्तेप[1]सुव्याप्तदाना ।
नादाप्ता व्यासुयत्तेन भसिसरुधिताभ्यासविद्यावसाना ।
नासावद्या[2] विसभ्या प्रतिवसति रुदद्धाविनिस्त्राभिमाना ॥७६॥

रामाप्तव्यालकुप्या[3] पतितरथकुलान्याननस्थायि सारा
रासायिस्थाननव्यासवन[4]चरशिशुस्तोमसत्राणवीरा ॥
रावि(वे)ण त्रासमस्तादितमणिरधिकत्तामसर्वांगधारा
राधा गर्वा समत्ता गतगजतुरगा व्याकुलव्याप्तमारा ॥७७॥

इत्याकलय्यानिलसूनुविक्रमम्
सविकलय्य नयनान्तवीचिभिः ॥
महोत्सवोत्फु[5]ल्लविशाललोचनो
रामो बभूवाहितनिर्जयोत्सुकः ॥७८॥

इति श्रीचरकूरिकोण्डुभट्टोपाध्यायपौत्रेण यज्ञनारायणभट्टतनयेन वेङ्कटेश्वरेण सर्वाम्बिकाभरणशुक्तिमुक्तामणिना विरचिते चित्रबन्धरामायणे महाकाव्ये सुन्दरकाण्डकथा सम्पूर्णा पञ्चमः सर्गः ॥

---

१—धाराव्यास, 'ख'
२—तक्ष्या, 'ख'
३—शुप्या, 'क'
४—दन, 'क'
५—फल्ल, 'क'

## षष्ठः सर्गः

अकीर्तयन् महाकीर्तिं रामस्त्वीयां तिंहारिणम् ।
हनूमन्तं राजमानं साकमेकेन कर्मणा ॥१॥

(वैदिकश्चतुर्थपादः)

पीनायताभ्यां बाहूभ्यां तन्मे प्रथि[1]तकर्मणे ।
अथान्यदुर्लभं प्रादादाश्लेषं[2] रघुनन्दनः ॥२॥

तदा हनूमतो देहान्निर्ययुः पुलकाङ्कुराः ।
रक्षो रणे पुरा लग्नाः शरीरे विलिखा इव ॥३॥

तेन विज्ञापितं श्रुत्वा लङ्कादुर्गस(म)संविधिम् ।
रामस्सहानुजश्चक्रे दण्ड[3]यात्रां प्रसन्नधीः ॥४॥

पृतनाच्छादितानन्ता वानराणां सगर्जिता ।
बालिवैरिणमन्वागादिन्द्रं कादम्बिनी यथा ॥५॥

---

१—प्रधित, 'क'
२—आशेषं, 'क'
३—दन्द, 'क'

गजकेसरियूथोऽग्रगवयौघेन सङ्गता ।
अटवीमनुकुर्वाणा शरखे [?] भयानकाः ॥६॥

नताहिपापापि[1](हि) तान तारताललतारता ।
हिता हवावाहिता हि पाल वाल लपा(वा)लपा ॥७॥

*नताहिपा । अपाहि । तान तार तालतलता रता ।*
*हिताहवा । अवाहिता । हि पाल [वाल] लवा [लपा] ।*

राम सेनाहतक्षोणीतलाच्चलित[2]धूलिभिः ।
न केवलं जलं सिन्धोराविलं च बलं रिपोः ॥८॥

वीचीभवविरावेलां वेलामेत्यासुनामुना ।
चमूरुभयदा(था)दारि वालिधेर्वालिवैरिणा ॥९॥

वलयन् ककुभान् पश्यन् विलयन्(यं) कलयन्[3] द्विषाम् ।
नी(नि)लयं मन्दवायूनां मलयं स निरैक्षत ॥१०॥

त्यक्त्वा ज्येष्ठं सुरासङ्का[4]शमुदारविभीषणः ।
रामान्तिकं सहामात्यः समुदार विभीषणः ॥११॥

ददावभयहस्तं स तस्मै चरणगामिने ।
प्रणिपातेन हि सकृद्भक्तानां स प्रसीदति ॥१२॥

रामस्याभयहस्तौ(तो)भा(त्था) तदानीमुन्नताङ्गुलिः ।
सूचयन्निव पौलस्त्यपञ्चासुचारणं रणे ॥१३॥

---

१—पू, 'ख'

२—चरित, 'क'

३—कलयद्विषाम्, 'क'

४—सुराशङ्को, 'क'

कटाक्षस्रजमासज्य करुणातन्तुकारिताम् ।
उपरिष्टाद्ददौ तस्मै लङ्कां शङ्कां विना विभुः ॥१४॥

सशकं(?) प्लवगेशार्तं रुधिराक्षेपकिंशुकम् ।
अं[1]शुकन्दलितो मोक्षमनेपीद्दलितांशुकम् ॥१५॥

सागरं जनमालोक्य सागरं जनभीषणम् ।
कुशेशयमिहातेने कुशेशयमितेक्षणः ॥१६॥

*सागरं जनम् । सागरम् । जनभीषणम् ।*
*कुशे । शयम् । कुशेशयमितेक्षणः ।*

वशेन ववृते क्रूरग्राहिकोऽपि जलाशयः ।
रामोऽजनि ततश्चापग्राहिकोऽपि जडाश[यः][2] ॥१७॥

*क्रूरग्राहिकः । अपि । जलाशयः ।*
*चापग्राहि । कोऽपि जडाशयः ।*

सन्धाय विशिखं चापे सन्धाय तमधीरधीः ।
वशयामास रामोहा वशयासौ महोदधिः ॥१८॥

रामस्य चरितस्सद्यो मुखे विशिघ(ख)मोधि(भेदि)नः ।
नलिनः पयसां राशिर्विषविन्दुरिवाबभौ ॥१९॥

केतुं[3] जयश्रियःसेतुं हेतुं कीतेर्दिशोऽवितुम् ।
हन्तुं पापं प्रियां नेतुं जेतुं चक्रे स लङ्घितुम् ॥२०॥

चिक्षिपुर्नूनमम्बोधौ सेत्वर्थं प्लवगा गिरीन् ।
विभीषणप्रतिष्ठायै त्रिकूटं नोदपाटयन् ॥२१॥

---

१—अशु, 'क'

२—जलाशयः, 'ख'

३—श्रिय स्वेतुं, 'क'

वानरा व्यतरन्वार्धिं[1] सेतुना नभसा भुजैः ।
रामो हनूमता तीर्णो लक्ष्मणो बालिसूनुना ।।२२।।

आरुरोह सुवेलाद्रिं भास्वतीवोदयाचलम् ।
तस्मिन्द्विषा[2]मनर्थार्थमथोत्पाताः प्रजज्ञिरे ।।२३।।

परिवेषावृतो भाविरणं मत्वा विभाकरः ।
आत्मबिम्बभिदा भीतः प्राकारमिव निर्ममौ ।।२४।।

स केवलं तदा जज्ञे रामस्वान्ते शिरो[3]ऽदयः ।
रक्तवर्षिभिरम्भोधैर्लङ्काद्वारे च सस्वनम् ।।२५।।

विजयं निजजामातुर्विनिश्चित्य वसुन्धरा ।
कम्पमाना भृशं रेजे नृत्यन्तीव तदा मुदा ।।२६।।

अभर्त्सयद्दधदृष्टिचपलां शुकसारणौ ।
पौलस्त्योऽधनुतारातिचपलांशुकसारणौ ।।२७।।

*दृष्टिचपलां शुकचा(सा)रणौ ।*
*चपलां शुकसारणौ ।*

मोहनायाथ वैदेह्या मूढ एव दशाननः ।
विद्युज्जिह्वं स्फुरज्जिह्वं मायाविनमचोदयत् ।।२८।।

रावणस्य प्रतापेन राघवस्य हृतं शिरः ।
इत्युक्त्वा छिन्नम[ग्रेऽस्या][4]मायारामशिरो न्यधात् ।।२९।।

---

१—वार्थे, 'क'

२—विषा, 'क'

३—रिवो, 'क'

४—ग्रिस्य, 'क', ग्रस्य, 'ख'

पश्यन्त्यास्तत्तु वैदेह्याः प्राणा नूनं[1] विनिर्गताः ।
निर्णेतुं पुनरायातं विद्युज्जिह्ववचोऽन्वयम् ॥३०॥

[शिरस्यकालमेवालिस्थि][2]तायां जवनाङ्कुरान् ।
अङ्कुरयामास तद्वा वचसामृतदारया ॥३१॥

रामे [पश्यति][3] शैलेन्द्रं कपिसिंहो रुषा प्लुतः ।
रक्षः कुञ्जरमापीड्य सौधस्थं पुनरागमत् ॥३२॥

अवरूढेऽचलाद्रामे ततस्तस्याखिला चमूः ।
रुरोध[4] लङ्काद्वाराणि रक्षितानि निशाचरैः ॥३३॥

रुचिरा समरानद्धा न चिरादधरा नवा ।
वानरा दररामन्दभीकरा समरा मगा ॥३४॥

(मुरजबन्धः)

सन्धानकरणे सद्यो रामेण प्रेरितोऽङ्गद [ः] ।
आगत्य लङ्कां पौलस्त्यमित्युवाच सभान्तरे ॥३५॥

पात्रत्वं नातपत्रस्य चामरं त्यज पामर ।
लङ्कायामभिषिक्तो हि राघवेण विभीषणः ॥३६॥

रक्षशं चरतं स्फीतं यन्त्रायं नदवादश(न) ।
नमवामनरं तारं दा(वा)मं वारत कातरः (र) ॥३७॥

---

१—नोनं, 'क'

२—सरमाकालमेखालिस्ति, 'क'

३—पश्येति, 'क'

४—मरोघु, 'क'

रतकातरवामं वारं तारं नमवामन ।
नदवार्थ(द)[न] यन्त्रायन्तं स्फीतं रचशं चर ।।३८।।

रहनो हरतां सीतां कालं काललनालल ।
रनमास रवातोवा[1] तन्तुतं हसनो[2] सहः(ह) ।।३९।।

हसनो सह तन्तुं तं वाता वारस मानर[3] ।
ललनाललकालङ्का तां [सीतां रहनोहर?][4] ।।४०।।

इति स्वीयवचःक्रुद्धपौलस्त्यप्रे[5]रितान् भटान् ।
जित्वा भक्त्या सोऽपि सौधं रामपार्श्वं पुनर्ययौ ।।४१।।

मन्यमानास्तृणायास्त्रामादेशा [दिष्टाः]प्लवङ्गमाः ।
नानाप्रकारं भीतारं चक्रुः प्राकारसङ्गरम् ।।४२।।

प्रति स्नु(घ्न) तः कराघातैर्लोहयन्त्रागतोपलान् ।
रक्तैरङ्गारवर्षाणि शमयन्तो व्रणस्नु तैः ।।४३।।

कबन्धमयसोपाङ्गैरारोहन्तो महाव्र[6]तिम् ।
परिघां (खां) भूसमां कृत्वा निर्मिमाणास्सुरङ्गिकाः ।।४४।।

लङ्केशितुरगाकारास्सन्देशे तुरगा गजाः ।
साटूपरो सकलाश्शूरा निर्ययुस्सकलाः पुरम् ।।४५।।

---

१—ररातोवातं, 'क'

२—हननो, 'क'

३—सर, 'ख'

४—नितां हरनो रह, 'क', सीता हरसो रह, 'ख'

५—प्रे[इति नास्ति], 'क'

६—ऋतिम्, 'क'

रणकेलिस्तदा जज्ञे मिथो वानररक्षसाम् ।
करनाले (वालै) र्महावातैः कुन्तैर्दन्तैश्च भीषणैः ॥४६॥

नलनीलनरा[1]टोपनटमाननगाकुला ।
करवालमहारोपखण्डिताननमण्डलाः[2] ॥४७॥

(लघुचक्रबन्धः)

प्रस्तोत्रा प्रतिहन्त्रा च शस्त्रप्रस्तरवारणैः ।
वि(नि)योगालम्भसम्पेषैर्याग भूमिरिवोज्ज्वला ॥४८॥

गगने वानरक्षिप्तं द्रुमवर्षं निरन्तरम् ।
क्षणमाकाशगङ्गायास्तीरोद्यानमिवाबभौ ॥४९॥

हृतायुधाः प्लवङ्गेन्द्रैः रक्तेनारक्तवाससः ।
विरताश्शस्त्रसन्यासं पी(वि)तेनुरिव राक्षसाः ॥५०॥

स्फारे तूर्यध्वंसौ(ध्वनौ) सिन्धौ रजो जवनिकान्तरे ।
रक्षो रक्तनदीकन्यादानं चक्रुः प्लवङ्गमाः ॥५१॥

उत्पातिता नभो लोला वानरैर्युधि पर्वताः ।
सक्रन्दनं प्रतिक्रोधादण्डयात्रामिव व्यधुः[3] ॥५२॥

रामाविशु(रामस्येषु?)विनिर्भिन्ना पताका दिवि रेजिरे ।
विवा[हे]ऽप्सरसां दत्ता देवेभ्यश्शाटिका इव[4] ॥५३॥

---

१—नवा, 'क'
२—मण्डिता, 'क'
३—व्यथाः, 'क'
४—यिव, 'क'

द्वन्द्वयुद्धं मुधालोक्य [भयेनास्तङ्गते रवौ?][1] ।
रक्षः कपीनामन्योन्यं निशायुद्धमवर्तत ॥५४॥

घु[2](धु)रवेदानुमेयाश्वं दन्तघा(द्वा) रोहितद्विपम् ।
प्रजज्ञे यानकं[3] भूषा तेजो भाषितराक्षसम् ॥५५॥

खररुचिमण्डभासि गुरुचारुणा तत्र [?]मः कुलेरण-
द्धरिनववैरिणां रणभरे भटमुक्तदरेभसन्तते ।
प्रकटकुधारणारतनयनपरिस्फुरितौचितामुका
क्वसित[?]भरेतलो[4]च्छणबाणपरम्परयावधीरिता ॥५६॥

(नागबन्धः)

तत्र तौ मेघनादेन सूदितौ रामलक्ष्मणौ ।
मैथिलीं दर्शयामास विमानेन दशाननः ॥५७॥

विचचार विशालाक्षी चमरीव गलाकुलाम् ।
चारती दूनभीदाशा रवदूताशना गवि ॥५८॥

(अर्धभ्रमकम्)

तौ दृष्ट्वा पुष्पका[5]रूढौ(ढा) दष्टा शोकमहाहिना ।
जीवनं प्राप वैदेही त्रिजटावचनौषधैः ॥५९॥

---

१—भयेवास्त…गतौ, 'क', भयेवांस्त ……, 'ख'
२—खुर, 'ख'
३—यासकं, 'क'
४—लाछण, 'ख'
५—पुष्पकौ, 'क'

शराहिदष्टौ तौ वीरा(रौ) विनताहितनन्दनः ।
धूम्राक्षाकम्पनौ वीरा(रौ) हनूमानारिकम्पनः ॥६०॥

स [कीनाशातिथी चक्रे?][1] वज्रदंष्ट्रं तथाङ्गदः ।
निरीयाय प्रहस्तोऽथ प्रशस्ता(स्ते) रणकर्मणि ।
निस्सा[र]ण [सम]मुखरा तमन्वगान्महाचमूः ॥६१॥

रुचिरा चिच्चार[2]चाररचनानुचरा रुचा ।
चराचरा चरानि च नारु(रा) चा[3] न चिरारचा ॥६२॥

*रुचिरा । अचित् चार चार रचनानुचरा रुचा ।*
*चराचरा । चरानि च नाराचा । नचिरा रचा ॥*

समुन्नतो द्विमुखेन द्विविधेन नरान्तरे ।
रोषानलेनि(न) [त]प्तेन प्रहस्तोऽमारि सङ्गरे ॥६३॥

ततः प्रहस्तनाशेन भग्नदक्षिणदोरिव ।
ससेनो विंशतिभुजो निरीयाय रणाजिरम् ॥६४॥

रामेषुखण्डितच्छत्रा(त्र)दण्डास्तस्याततायिनाम् ।
आरोहणाय नीतानि शूलानि बलभूस्तदा[4](भृत्तदा)॥६५॥

शार्दूल इव सारङ्गान्[5] विद्राव्याथ हरीश्वरान् ।
निपीड्य लक्ष्मणं तत्र रावणः प्राह राघवम् ॥६६॥

---

१ किनाशातिदी शक्रे, 'क'
२—चच्चार, 'क'
३—काकचा, 'ख'
४—भूसदा, 'क'
५—सारगान्, 'क'

हाहा हह हह हह हुं हुं हुहि हहे हहि ।
हाहा हू हू हहाहाहं हहाहिह हहाह(हि) हाः ॥६७॥

*हाहा । हहह । हहह । ह (हुं)हुम् । हे(हु) हिह । हे हिहि (हहि) ।*
*हा हा हू हू हहा [ह] अहम् । हह । अहि ह [ह] हा । अहिहा[ः]*

(एकाक्षरी)

इत्युक्त्वा रामबाणार्तस्स दुद्राव[1] पुरीं प्रति ।
सहस्ततालहसितो देवैर्दिवि गलत्कुचः(कचैः) ॥६८॥

व्यक्तश्चापशरव्रातो बहुधा भिन्नविग्रह[ः] ।
वाताहत इवाम्भोधः स बभौ गलिताम्बरः ॥६९॥

पुरापीतसुरो जिस्ये[3] कुम्भकर्णप्रभो(बो)धितः ।
पुरोहितसुरो जन्ये रोषे दृष्टाथ निर्ययौ ॥७०॥

*पुरा अपि । इत सुरः । जन्ये पुरा । पीत सुरः । जन्ये ।*

कुशं काशं शशं काशं केशं शङ्का शकाशकः ।
कुशं काशः कुशं काशं शशङ्के शकशाङ्कुशः ॥७१॥

(द्व्यक्षरी)

नासाश्रवणरन्ध्रेभ्यो निर्जग्मुस्तेन रक्षसा ।
भक्षिता वानरा वीरा जितेभ्यो मशका इव ॥७२॥

अथारूढारि (रूढाः) प्लवङ्गेन्द्रास्सर्वाङ्गं तस्य रेजिरे ।
क(र)णरङ्गविहारेण सञ्जाता पुलका इव ॥७३॥

---

१—दुद्रोव पुरिं, 'क'
२—वृक्त, 'क'
३—जस्ये, 'क'

विग्रीकृतः कुम्भकर्णोऽग्रहतेनार्कसूनुना ।
राममेवाभिदुद्राव राहुरर्कमिवोज्ज्वलम् ॥७४॥

तन्मूर्धजीर्णकुसुमं तदा रामशिलीमुखैः ।
व्याविद्धं निपपातोर्व्यां स्वमुक्तैः[1] प्र[स]वैस्सह ॥७५॥

निरगात् सबलो दीर्घमतिकायोदयः पुरः ।
अर्घो(?)तु युद्धो [2]युद्धार्धमतिकायोदयः पुरः ॥७६॥

*दीर्घमति कायोदयः पुरः । अतिकायः । उदयः । पुरः ।*

स कपीन् प्रहरन् युद्धे चतुराननयोगतः ।
अमारि लक्ष्मणास्त्रेण चतुराननयोगतः ॥७७॥
*चतुरान् अनयः गतः* [3]। *चतुरानन योगतः ।*

जाता मेघनादेन रामसेना दमा यया ।
कृता ? मेघनादेन[?] कामदनापमा ॥७८॥[4]

*अपमा । अयया ।*

(गोमूत्रिकाबन्धः)

पीडिता मेघनादेन स सेना राघवो ततः ।[5]
महौषधिं समानीय जीवयामास मारुतिम् (तिः)॥७९॥

---

१—स्वमुक्त , 'क'

२—युर्द्धोऽर्थयति, 'क'

३—'ख' मातृकायां पदच्छेदो नास्ति ।

४—'क' मातृकायां श्लोकोऽयं नास्ति । अशुद्धश्चायमिति ।

५—'क' मातृकायामंशोऽयं नास्ति ।

रणश्रान्तिजलापूर्णः कुम्भो दैत्याम्बुदासितः ।
कपालशेषं प्राहारि सुग्रीवभुजगेष्वतः[1] (वेष्टितः?) ।
हतः कुम्भीनसः क्रूरो निकुम्भोऽथ[2] हनूमता ॥८०॥
वैवस्वतपुरं प्राप पितृज्येष्ठाविवेक्षित(तु)म् ।
रणाय निर्ययौ राज्ञा मकराक्षो निरीक्षितः[3] ॥८१॥
मृत्युदूति कटाक्षेण मरणायापि लोकतः ।
तमन्वयाय गर्जन्ति[4](न्ती) महती राक्षसी चमूः ।
कादम्बनीव दुर्वारा वायुमौत्पात[5] कालिकम् ॥८२॥
धीराय (या?) माहयाराधि रामाकामा मका[6] मरा ।
याका भागा गाभा काया मामा गारा रागा मामा ॥८३॥

*धीरा यामा । हयाराधि । रामा कामा । मा(म)का । अम । राया । का भागा । अभागा(गाभा) । काया । मामागारा । अरागा । अमामा ।*

(गुर्वक्षर[7]सर्वतोभद्रबन्धः)

हतो रामेण कृत्वा जयितभीमकराञ्जकः ।
गतो रणक्ष्मां[8] लूवीतालुरभीमकराम्बिकः ॥८४॥
वानरान् वीथयित्वाथ रावणी[9] रण कर्कशः ।
हत्वा मायामयां सीतां निर्जगाम निकुम्भिलाम् ॥८५॥

---

१—भुज्येष्वितः, 'क'
२—निकुम्भोद, 'क'
३—क्षतः, 'क'
४—गर्जीति, 'क'
५—पतकादिकम्, 'ख'
६—माका, 'क'
७—गुर्वकपर, 'क'
८—रणक्षां लुलीतालुर भीमकराम्बकः, 'ख'
९—रावणा, 'क'

होतारं विजयायेन्द्रजेतारं तं विभीषणः ।
रामायावेद्य सौमित्रसहितोऽगान्निकुम्भिलाम् ॥८६॥

स्तेते (हते तते) निजे नै(सै)न्ये दै[वा]नीते(तैः)प्लवङ्गमैः ।
होमाग्निघ्नतसङ्क्रुद्धा(द्धो) रावणो(णो) रणमभ्यगात्॥८७॥

गर्जन्तौ विलसच्चापौ क्षेत्रेऽथ[1] पुलकाङ्कुरे ।
लक्ष्मणेन्द्रजरामेवौ(?) शरवर्षममुञ्चताम् ॥८८॥

द्विषां मांसार्थि नो[2] गृध्रान् शरैर्निर्माय पञ्जरम् ।
पाययित्वा छलद्रक्तं [तदा] सौ[3]मित्रिराशयत् ॥८९॥

अखण्डाखण्डलास्त्रेण लक्ष्मणप्रे[4]रितेन सः ।
अभियुद्ध(द्ध्य?) हतो मायां विनेदान्त[5]र्धिमाययौ ॥९०॥

क्वचित्ता(त्रा)सं क्वचित्कोपं कलयन् हृदये ततः ॥
क्वचिद्भेरीरवं शृण्वन् क्वचिद्रोधननिःस्वनम् ॥९१॥

निर्व(र्भ)यो सङ्गरे शक्त्या लक्ष्मणं च न्यपातयत् ।
अथ रावणबाणार्तान् वेदान्तप्रतिपादितम् ॥९२॥

रामाद्वैतं स्फुटं पश्यन् पलायितहरित्सुसः ।
सञ्जीवनं मरुत्सूनावासय(नानय?)त्यथ केवलम् ॥९३॥

---

१—क्षेत्रेद, 'क'
२—मांसार्थनो, 'क'
३—'क' मातृकायां 'सौ' इति नास्ति ।
४—क्ररितेन, 'क'
५—तीर्थ, 'क'

सौमित्री(त्रि?)रुदयं नागान् मूर्छितो भानुमानपि ।
अमोदमानशे रम्यं त[1]दाराममुखाम्बुजम् ।।९४।।

प्रकाश[दै[2]?]न्यमाजग्मुः [3]रामं विधुततारकाः ।
पलायितेन स[4]म्प्रापि मित्रचक्रेण मेलनम् ।।९५।।

ततस्तत[स्]तमोजालैरभावि हरिदन्तरैः ।
अञ्चितं विबभौ सद्यो रक्तिभा लक्ष्मणाम्बरम् ।।९६।।

अमन्दो नाशमापेदे मन्देहानां महोत्सवः ।
प्रकाशहै(दै?)न्यमायापि तदा कुमुदबान्धवः ।।९७।।

प्रपेदिरे चिरं सुप्ता दानार(नवा) जागरूकताम् ।
[5]अक्षो विधिःप्रेरणया व्यर्थिक्वच(?)रथत्परः ।।९८।।

निरर्थकी कृतच्छत्रो गृध्रधायेन सूरिणा ।
प्रतिकूलमरुच्छालनिरर्थकृतचामरः ।।९९।।

शिवारवयुथाभूतभटकण्ठीरवस्वनः ।
भुजामस्तककण्ठोरुबाहुल्यादपि केलव (यः?) ।।१००।।

कायव्यूहमिवोद्गृह्णन् कर्मशेषोपभुक्तये ।
निर्जगाम स यक्षोणिन् रवं तुरगशालिना ।।१०१।।

---

१—रदा, 'क'
२—उभयो मातृकयोः रिक्तमेतत्स्थलम् ।
३—कामन्तमततारकाः, 'क'
४—नम्प्रापि, 'क'
५—लक्षो, 'ख'

रथेन मरणाकांक्षि रणभूमिं दशाननः ।
गगनभ्रमणालग्नमुदीरच्छेदनेमिकम् ॥१०२॥

आरुह्येन्द्रक(र)थं रामो रणायाभिजरा(गा)म तम् ।
वचनं वचनेनास्त्रमस्त्रेणाकुरुतां रणम् ॥१०३॥

वारं ताविव अन्योन्यं वारिणौ रामरावणौ ।
केशतन्तुभ(भि)राकीर्णैः पतितैर्मूर्धकन्दुकैः ॥१०४॥

भुजादण्डैर्दशान्यन्य[ान्] चक्रे दुर्भूतबालकाः ।
तदा रामाशुगस्पर्शान् मस्तकानिन्द्रवैरिणः ॥१०५॥

निपेतुः परिपक्वे[1] तु फलवत्तात(ल?)पादपात् ।
प्रा(प्रो)क्तं वीरवचः शेषं पतद्भिः पूर्वमस्तकैः ॥१०६॥

वदन्त्यन्यानि शीर्षाणि रामस्याशु[?२] जज्ञिरे ।
परम्परितरामेषुघातजैर्विवरैर्वृता ॥१०७॥

शशङ्के रावणामूर्तिश्चालिनी करशोधिनी ।
भिन्नानि रावणेनासन्यासिभूतेशतृप्तये ॥१०८॥

तानि रामेण शीर्षाणि भूतानां तृप्तयेऽधुना ।
पपात राममुक्तेन ब्रह्मबाणेन रावणः ।
भूततन्मूर्धभारापि लघ्वजज्ञ(?) तदा महि(ही) ॥१०९॥

---

१—परिपक्वा, 'ख'

२—उभयोः मातृकयोः रिक्तमेतत्स्थलम् ।

सद्भावेङ्गितबन्धुपोषचतुरैर्नामाङ्कितैः शङ्करै-
रुक्तः कम्रविध[1]प्रगेयचरितैर्जेयच्छटा[2] कम्पनैः ।
जन्यातीधमरातिमान्यचक्रतक्त्राणं यथाविः पदे
देवावां (नां?) नतदोरुभिर्निजशरैरेष्वासनैः सन्दधे[3] ॥११०॥

[4]भुविकृतसङ्गतेस्सदृशी चण्डरुचेस्स[5]पराक्रमे भृशम्
युधि धृतकार्मुके विहितपङ्क्तिमुखे रघुनायके तदा ।
इह मघवाद्यता सकलदेवचमूर्हतदुन्दुभिस्फुटम्
दिवि निजशाखिनां प्रसववृष्टिकरिप्रकच्चोत्सवा बभौ ॥१११॥

(अनेकश्लोकगर्भश्लोकः)

कृतसङ्गतेस्सदृशेशचण्डरुचे-
र्हतकार्मुके विहितपङ्क्तिमुखे ।
मखवाहृता सकलदेवचमू-
र्निजशाखिनां प्रसववृष्टिकरी ॥११२॥

विहितपङ्क्तिमुखे रघुनायके
सदृशचण्डरुचेस्सपराक्रमे ।
सकलदेवचमूर्हव(त?)दुन्दुभिः
प्रसववृष्टिकरी प्रकच्चोत्सवा ॥११३॥

---

१—विथ, 'क'

२—च्छता, 'क'

३—शन्दधे, 'क'

४—अस्मात् श्लोकात्पूर्वं पङ्क्तिरियं मिलति "चित्रबन्धः कविनाम काव्यनाम बद्धे वेङ्कटेश्वरकविबन्धरामायणम्" ।

५—सेवराक्रमे, 'क'

आतङ्कशङ्कारहितां सलङ्का—
साम्राज्यलक्ष्मीं करुणाभरेण ।
ज्येष्ठोचितं कर्म[1] सुधाय रामो
विभीषणेऽग्रे निदधे निषण्णे ॥११४॥

रामधामनामवक्त्रसोमधामरोमला
लालिता विभीषणेन वायुसूनुनन्दिता ।
तारकेव भूमिभागमाश्रिताप निर्मला
लालसा मनोभव[ा]न स त्रि(त्र)पा क्षमासुता ॥११५॥

(खड्गबन्धः)

रामोदितं परुषभाषणमाकलय्य
सायन्तनि दिनमणेरिव कान्तिरिद्धा ।
वह्निं प्रविश्य विपुलं पुरतोशि(तोऽखि)लानां
शुद्धोदयास्फीत[3]मिनं पुनराप सीता
(शुद्धोदयास्फीतमिवाप सीता) ॥११६॥

जीवितैः पुनरशेषदेवतै—
र्वानरैस्सह विभीषणास्वितः(न्वितः) ।
सार्कसूनुरवनीसुतापतिः
पुष्पकेण स ययौ पुरीं प्रति ॥११७॥

---

१—कर्ध, 'क'

२—'क' मातृकायां 'ला' इति नास्ति ।

३—स्वीवमिनं 'क'

पुरातनान् सर्वक[1]था विशेषान्
विदेहजायै कथयन्विनोदात् ।
प्राप्ता समस्तापि समस्तकीर्त्यो
रामो भरद्वाजमुनीश्वरेण ॥११८॥

जयजय वितमायजयवादायदयश्रितशूरपा[2]मरे
नय परलोकमेय तव दैवतशत्रुततिः पलायते ।
जय धरलकायपरवीर विशिक्तकसायकाशाशने
भयकृपणैतपालममरानमग्रलसेरतः शिवे ॥११९॥

(नागबन्धः)

अपकाय चय[3]ध्येय भयहेय वरश्रय ।
व्ययत्त्वय नयश्रेय जयमाय दमन्नयः ॥१२०॥

(छत्रहरबन्धः)

इतिलि(तीरि?)तो मुनितिलकेन पादपान्
विलोकयन् पदि[4]पलितां (पदपतितां?) रघूत्तमः ।
अभिद्द(द्रु?)तं भरतमवैक्ततोत्सुकः
सहानुजं फलितमनोरथद्रुमम् ॥१२१॥

नन्दिता निजपदारविन्दयो—
र्नन्दितेन भरतेन राघवः ।
या विमुच्य तदाश्रमे पुरी-
माजगाम रघुराजपालिताम् ॥१२२॥

---

१—रथा, 'क'
२—शूरणा, 'क'
३—मध्ये, 'क'
४—पद्यिपलतां, 'क'

स रत्नसिंहासनमध्यमाश्रित-
स्ततोऽभिषिक्तश्चतु[र]र्णवैर्जलैः ।
विभीषणार्कात्मजभूतचामरो
बभूव शत्रुघ्न(?)द्रुतो स्म वारणः ॥१२३॥

राममाप मुदासाद्याद्राज्यलक्ष्मीस्सदातनी ।
नितदास्स क्रूपश्रेणिः प्राप्तभृत्योपमामरा ॥१२४॥

(आन्दोलिकाबन्धः)

साम्राज्यलक्ष्मीमुदितोऽथ रामो
यदो(थो)चितं पूजितमित्रवर्गः ।
दानैर्मखैस्तर्पितविप्रदेव-
श्चिरं मही(हीं) पालयति स्म सर्वाम् ॥१२५॥

रामं देवं द्यामायावं द्रागाकारं भो दातारम् ।
गेयो भूदारो यो धेयो वन्दे हंसं तं भिन्नाधिः ॥१२६॥

(कङ्कणबन्धः)

षड्दर्शनि तत्वविधः कवीन्द्रा
लक्ष्माद्दता वह्वृचस्सार्वभौमाः ।
श्रीयज्ञनारायणभट्टसंज्ञा
[प्र]यान्तिभूमौ द्रुमतातपादाः ॥१२७॥

इति श्रीचरकूरिकोण्डुभट्टोपाध्यायपौत्रेण यज्ञनारायणभट्टतनयेन
वेङ्कटेश्वर (रेण) सर्वाम्बिकागर्भशुक्तिमुक्तामणिना विरचिते
चित्रबन्धरामायणे महाकाव्ये युद्धकाण्डकथा
सम्पूर्णा षष्ठः सर्गः ।

## परिशिष्टम्-१

### चित्रबन्धरामायणे बन्धाः

**अर्धपादप्रतिलोमम्**

लालोना गगनालोला धूरिता ननतारिधूः ।
स्राविकाननकाविस्रा दारिताननतारिदाः ।।१।३८।।

सा रागाददगा रासा राजिताहिहिताजिरा ।
राका वाशशवाकारा राजिकागगकाजिरा ।।२।४७।।

**अर्धभ्रमकबन्धः**

तरङ्गकनिते सेभे रञ्जिते मदिराक्षसे ।
गतेऽतिलानं कैराते कमलाकरनन्दिनि ।।३।१७।।

स्तनाग्रदामालङ्कारा नाराधिरतिकारिका ।
ग्रथिता भारीतिकालं दारभासुररीतिमा ।।३।२५।।

चचाल सानिनादाथ चलितागमहीनदा ।
लताहराकारहीना सा गरालम्बिकामतो ।।३।३३।।

उदारनानानाराचा दानवामतभीकरा ।
रवाढ्यमायायाभीना नाममानितयातना । ३।३५।।

विचचार विशालाक्षी चमरीव गलाकुलाम् ।
चारती दूनभोदाशा रवदू ।शना गवि ।।६।५८।।

अर्धयमकम्

सपर्यया दारचितमहसा रञ्जितोदयः ।
स पर्ययादारचितमहसारञ्जितोदयः ।।१।६८।।

सागरं चारुलोकेशं कृतमापन्नवारणम् ।
सागरं चारुलोके शं कृतमापन्नवारणम् ।।४।५८।।

अन्त्यपादगोपनम्

धीरो मुखरिताशान्तं जगाहे रावणालयम् ।

इहाविरलचित्राभे कामिनीयत्नकोमले ।
अहिष्टान्नसुतः सीतां विचिकाय महीसुताम् ।।५।३८।।

आद्यन्तयमकम्

सायके ताटकारातेः सुबाहुरवसायके ।
सायकेऽस्याहुतिरभूत् वह्न्याभे रंहसायके ।।१।५२।।

आन्दोलिकाबन्धः

राममाप मुदा साक्षाद्राज्यलक्ष्मीस्सदातनी ।
नितदास्स कृपश्रेणिः प्राप्तभृत्योपमामरा ।।६।१२४।।

एकाक्षरी

काकिकाकाककङ्काङ्कां काकुकेकिककेककाम् ।
काकुकैकाकिकोकोकः कौ कौकिकैककाककाम् ।।१।३६।।

तते तातेऽतीतताते तातताततेति तुत्ततिम् ।
ततोऽतत्त ततैतत्ते ततातत्तातिते ततः ।।२।४६।।

मोमामामामिमःमामामिमौ मा मममा मम ।
मा ममौ मा ममौ मामे मामा माममुमामुमुत् ।।३।५।।

शाशशेशाशुशाश्शाशे शशे शाशि शिशो शश ।
शशाशशं शशशश शाशाशा शशशो शिशि ।।४।५०।।

रिरारि लालालीलूलो लोलुलोलो लुलोऽररम् ।
लोलालिलाली लालीरो लीलोल्लालं ललौ ललः ।।५।४।।

पूपोऽपि पूपपूः पाप पापपं पापपः पिपाः ।
पिपाः पपौ पपौ पापं पापापापं पपौ पपौः ।।५।६२।।

हाहा हह हह हह हु हु हुहि हहे हहि ।
हाहा हूहू हहा हाहं हहाहिह हहाहिहाः ।।६।६७।।

**ओष्ठ्यक्षरम्**

भूमौ भीमामिमां भामामपि पापोपमां प्रभुः ।
भोभूम्नाभिभवं प्राप्तो बभ्राम प्राप्य भूमिपः ।।२।१६।।

**कङ्कणबन्धः**

रामं देवं द्यामायावं द्रागाकारं भो दातारम् ।
गेयो भूदारो यो धेयो वन्दे हंसं तं भिन्नाधिः ।।६।१२६।।

**क्रियागोपनम्**

ततः संवीक्ष्य वैदेहीं मुदितेऽस्मिन् दशाननः ।
सहारभूषणाढ्याभिर्वनिताभिस्तदन्तिकम् ।।५।४६।।

कुपितेन प्लवङ्गानां कुञ्जरेण बलीयसाम् ।
रावणोद्यानमुत्फुल्लपुष्पमालाविराजितम् ।।५।५४।।

एत्य दृष्टं कटाक्षाभ्यां मृत्युरावणयोस्ततः ।
तस्मिन् रषा शरानक्षस्सहासवदनोज्ज्वले ।।५।।५६।।

**खड्गबन्धः**

रामधामनामवक्त्रसोमधामरोमला
लालिता विभीषणेन वायुसूनुनन्दिता ।
तारकेव भूमिभागमाश्रिताप निर्मला
लालसा मनोभवानसत्रपा क्षमासुता । ६।११५।।

**गोमूत्रिकाबन्धः**

पम्पाकूले क्षणोद्भीतो वीक्ष्य वीरौ खरांशुभूः ।
कम्पालोलेक्षणो जातो लक्ष्यसारौ पराधिभूः ।।४।१।।

हनूमान् विषयाधारो भीमं चापधरं पटुः ।
तनूमान् विनयासारो रामं प्राप वरं वटुः ।।४।३।।

विज्ञाय स तदाकूतमानन्द विलोभिना ।
राज्ञापि समुदाधीतं वनवृन्दविलोलिना ।४।४।।

सुग्रीवं तमतित्रस्तं निनाय रघुनन्दनौ ।
व्यग्रीभूतमतिस्रस्तं सनाकेरमनन्दनौ ।।४।५।।

जहसे गगने लोकैः स्नेहं साक्ष्यचरन्तयो ।
रहस्ये गगनेऽनेकैः सोहं वीक्ष्य निरन्तयोः ।।४।७।।

प्रत्ययाय हरीशस्य सालाः कृत्ताः महेषुणा ।
सत्यभूयपरीतस्य लोलाः सीतामहेषिणा ।४।११।।

सङ्गरं वनजातेन चक्रे बालिकृतध्वनिः ।
सङ्गतोऽवरजातेन वक्रे केलिकृतध्वनिः ।।४।१४।।

सुग्रीवं राघवो भूरि सन्दधे वीक्ष्य सायकम् ।
सग्रीवं लाघवोत्थारिवृन्दलावी स साधकम् ।।४।१७।।

बाणेन पतितस्तस्य कृत्तो बालिः धरातले ।
रावेण परितस्त्रस्यच्चित्तो धूलिभराविले ।।४।१८।।

निन्दितो बालिना रामो व्याधलीलानुसारतः ।
नन्दितो वादिना वामो योऽघवेलानुसारितः ।।४।१९।।

घनागमेन तत्रासे शक्रचापकयोगिना ।
वनानमे पतत्रासे वक्रतापवियोगिना ।।४।२३।।

मदनश्वासवातोग्रैर्ववले पवनाङ्कुरैः ।
नदविश्वासवादाग्रैर्नवनीपवनाङ्कुरैः ।।४।२४।।

रसिता रचितामोदैर्ननृते च कलापिभिः ।
लसिता रहिता नादैः सनृमुच्चपलापिभिः ।।४।२७।।

तारया योगमत्तस्य गर्वमस्थ गिराप्तया ।
स्फारया योपमग्नस्य सर्वमस्य करालया ।।४।४४।।

वानरालिपिपासार्ता जगाहे नगगह्वरम् ।
वनपालिष्वपावार्ता न गाधं नदगह्वरम् ।।४।५५।।

अपारा दक्षिणाम्भोधिवेला प्लवगसेनया ।
भूपालदक्षिणाराधि लोलालं वर्चसेनया ।।४।५७।।

**चतुरक्षरी**

दददादं दाददादी लीलालोलालिलालिलूः ।
नानानेनाः ननानेन ययुयायी ययोऽयय: ।।१।१८ ।

बलाबलाबलालम्ब्रौ बलौ बिलबिलाविलाम् ।
वनिं नवावनीनीवीं वनीवननवाविनौ ।।१।३५।।

जानाना जननी नाना निजाजनि जनी जनौ ।
रिपुरैपे परापारे पौरपूरपुरे पुरा ।।२।६८।।

घना घना घनघना नाघनाना घनाघनाः ।
धाराधरा धराधारा राधा धाराधरा धुरि ।।४।३२।।

**चतुस्तबकयमकम्**

कलितं वनमातनुतेऽसुभिदा
मधुना मधुना मधुना मधुना ।
दयितेव यमद्य धिनोति लता
सहसा सहसा सहसा सहसा ।।३।६२।।

**चतुष्पादयमकम्**

सारभूरितरसाहसेनया सार भूरितरसा हसे नया ।
सारभूरितरसा हसेनया सारभूरितरसाह सेनया ।।१।८२।।

छत्रहरबन्धः

अपकाय चयध्येय भयहेय वरश्रय ।
व्ययक्षय नयश्रेय जयमायदमन्नयः ।।६।१२०।।

त्र्यक्षरी

माकामो नामुकः कामं कामिनीकामकामुकः ।
मानिकः कामकामोकमनुमेने कुकाननम् ।।२।२०।।

रुचिरा चिच्चारचारचरचनानुचरा रुचा ।
चराचरा चरानि च नाराचा न चिरारचा ।।६।६२।।

द्व्यक्षरी

नाना नादेन दूनाने दीने दीने दिनेदिने ।
दानिना दानिना नोदं ददाने दिननीनिना ।।१।१३।

मारामरोऽमरामीरो रामारामो रमारमः ।
मुरमारोऽरिरैरोऽरं रामो रेमेऽरिरीरुरुः ।।१।३२ ।

राजराजो राजराजराजो जररजा जजः ।
राराजोऽजरराजाजौ रराजाजिर्जरारुजा । २।२।।

काले काले लोलकालिकोली कलकलाकुलम् ।
लोकालोकं कोकिलाली काकलीकुलकैः कलम् ।।३।२।।

वारं वारं वराराव वावरं रविवाररः ।
वारं वारं वरिविरो रुराव विरिवावरः ।५।२।।

ननिलं नलिनं नालं लोलनालं ललानिलम् ।
नालानं नालिनोऽलूनं नलिनं ललनाननम् ।।५।१२।।

दामोद्दामा मन्दमन्दमादमादमदो मदम् ।
मुमोदादिदमामोदिमाममादादिमो मदः ।।५।२३।।

करकाकारकाकारि राकाकारः कराकरः ।
किराकरकरः कारकारकः करकारकः ।।५।२६।।

हरि राहार राहोरिहारि हरिरहो हरः ।
हरिहाराहाररोहिहरी रहो रहो रिहो ।।५।३४।।

कुशं काशं शशं काशं केशं शङ्का शकाशकः ।
कुशं काशः कुशं काशं शशङ्के शकशाङ्कुशः ।।६।७१।।

नागबन्धः

खररुचि मन्दभासि गुरुचारुणा तत्र [त]मः कुलेरण-
द्धरि नववैरिणां रणभरे भटमुक्तदरेभसन्तते ।
प्रकट कुधारणारतनयनपरिस्फुरितौचितामुका
नत्रसित [?]भरेतलोच्छण बाण परम्परयावधारिता ।।६।५६।।

जयजयवितमाथजयवादायदयश्रितशूरधामरे
नयपरलोकमेय तव दैवतशत्रुततिः पलायते ।
जय धरलकाय परवीर विशिक्षकसायकाशाशने
भयकृपणैतपालममरानमग्रलसेरतः शित्रे ।।६।११६।।

निरोष्ठ्यम्

शारदा शारदाकाशनीरदाकारशालिनी ।
श्रितस्य रसनारङ्गे लास्यलीलाः क्रियात्सदा ।।१।२।।

निर्जरार्थनयाथाङ्गी चक्रे दशरथाज्जनिः ।
शार्ङ्गिणा श्रितरक्षायै रचयन्ति न किं घनाः ।।१।२२।।

यथा रात्रिञ्चरेशस्य शिरश्शैलस्य शेखरम् ।
अङ्घ्रिणाताडयद्ग्रस्तलताकेशं किलानिलिः ।।५।१।।

पादप्रतिलोमम्

दीनसारसभारासा साराभा सरसा नदी ।
तस्य का च दराराधा वारारादचकास्यत ।।२।४१।।

**पादयमकम्**

प्रापुर्हरिं सुरा रक्षः सभयाखण्डलालसाः ।
यथाद्रयोऽब्धिं यमिनां सभयाखण्डलालसाः ।।१।१९।।

स गुरोराज्ञया कर्तुं विश्वामित्रमहं तया ।
अन्वगात् सानुजो हन्तुं विश्वामित्रमहन्तया ।।१।३४।।

ततोऽनयद्धनूरत्नं गाधेयस्य गिरीशतुः ।
नृपो मग्ना नृपाः सारेऽगाधे यस्य गिरीशितुः ।।१।७०।।

सबन्धुतां ततोऽतीतापत्तिपङ्क्तिरथायुताम् ।
मैथिलोऽनीनयत् सेभपत्तिपङ्क्तिरथायुताम् ।।१।७५।।

निर्मितानेकमाणिक्यकायमाना समन्ततः ।
पुरी रराज मुद्वृद्धकायमानासमन्ततः ।।१।७६।।

तनयैराजगामाथ सूर्यान्वयसमुन्नतैः ।
सहायोध्यां दशरथः सूर्यान्वयसमुन्नतैः ।।१।८१।।

तीर्त्वा कलिन्दजां वीतलाघवाश्रममापगाम् ।
तदादिष्टां ततः सेना राघवाश्रममाप गाम् ।।२।५८।।

वाराचक्रे पितुर्धीमानिवापन्नयनाटिना ।
अथ रामो नदीवारा नीवापन्नयनाटिना ।।२।६०।।

ननाम स महारामं राज्यदित्सुर्हिरन्धरम् ।
ननाम स समहाः रामं लेभे लोभोऽपि किञ्चन ।।२।६१।।

हन्तुं कृतागसं शार्ङ्गि पुरोपान्तं परागतः ।
वृण्वन्दिशः स सकपिः पुरोपान्तं परागतः ।।४।१२।।

**प्रतिपदभित्तिलोमकम्**

वनं नवं दिनानादिनदादानवरारवम् ।
गतोऽतोऽगजराराजं रामो मारो मनोनमः ।।२।३१।।

**प्रतिलोमयमकम्**

सागता शमितायासारावायामितिधामभूः ।
निजमारुतधूताघापाता सन्ततभा भुवि ।।१।६०।।

विभुभाततसन्तापाघाताधूतरुमाजनिः ।
भूमदा तिमियावारा सायाता शमितागसा ।।१।६१।।

तारकानकसानादा लीना सा जगदायता ।
विदितासिलताहीना मायासाररसाहवा ।।३।३६।।

वाहसाररसायामा नाहिता लसिता दिवि ।
तापदा गजसानाली दाना सा कनकारता ।।३।३७।।

रिपुहा पुरि यो जेयोऽमेयो मे विभुको भुवि ।
यजतं जय सम्भासं वाचावा लग मागल ।।४।४८।।

लग मागल वाचा वा सम्भासं यज तं यज (जय) ।
विभुको भुवि मेयोऽमेयो जेयो रिपुहा पुरि ।।४।।४९।।

रचशं च रतं स्फीतं यन्त्रायं नदवादश (न) ।
नमवामनरं तारं दा(वा)मं वारत कातर ।।६।३७।।

रतकातरवामं वारं तारं नमवामन ।
नदवादन यन्त्रायन्तं स्फीतं रचशं चर ।।६।३८।।

**मध्ययमकम्**

जज्ञे वातापिना तृप्तो मुनिवातापिनाविना ।
मानवातापिनापारकीर्तिवातापिनाम यः ।।३।।११।।

तदा सम्पातिना नाम शनैः सम्पातिना विना ।
सहसाज्ञापिता सीता राक्षसाज्ञापिता पुरि ।।४।४५।।

**मुरजबन्धः**

साहसानलसामग्री महसापरसामरा ।
रामसारविसामर्थ्या तामसानलसामता ।।१।४०।।

मरुतामखिलारिघ्नगुरुतादभ्रतारिका ।
कारिताभ्रलताशङ्का सारिता मखिताशया ।।१।५१।

विपुला विचला लङ्का त्रिपुलागकुलालका ।
काललाकुटिलालन्न काललापि च लालसा ।।१।७४।।

रुचिरा समरानद्धा न चिरादधरा न वा ।
वानरा दररामन्दभीकरा समरा मगा ।।६।३४।।

**लघुचक्रबन्धः**

नलनीलनराटोपनटमाननगाकुला ।
करवालमहारोपखण्डिताननमण्डलाः ।।६।४७।।

**वैदिकश्चतुर्थपादः**

प्रदक्षिणं मे हरिणा वहन्ति
खगाः कथन्नु प्रतिकूलभावम् ।
इत्यूचिषि क्ष्माभृति तत्र रामो
दुःशासरागा इति घोष आसीत् ।।१।८३।।

रोहिण्येवाम्बरे चन्द्रः श्रीकामः पितुराज्ञया ।
राघवः सीतयागारे निषसाद धृतव्रतः ।।२।११।।

राघवास्फारितोद्दण्डकोदण्डगुणनिःस्वनः ।
शुश्रुवे खरवाहिन्यां जयतामिव दुन्दुभिः ।।३।३९।।

मा दर्शयत वैदेहीमारादारामपादपाः ।
इति सम्प्रार्थयामास प्रयस्तोत्रो वनस्पतिः ।।५।४५।।

अकीर्तयन् महाकीर्तिं रामस्वीयार्तिहारिणम् ।
हनूमन्तं राजमानं साकमेकन कर्मणा ।।६।१।।

**सन्दष्टयमकम्**

साकेत संज्ञानगरी नगरीति गृहोज्ज्वला ।
इहास्ति भूरिवरणावरणा धरणीतले ।।१।५।।

सशत्रुघ्नः शुभरतो भरतो मातुलालयम् ।
ततो जगाम पुरतः पुरतोगामिवाहनः ।।२१।।

**सर्वतोभद्रबन्धः**

विवारहाहारवावि वादमाननमा दवा ।
रमारताता रमारहानतातततानहा ।।२।४६।।

हयेनलालानयेह येनगा ननगा नय ।
नगा निगाजा निगानला नगागगजानला ।।२।५४।।

नताहि पापाहि तान तारताललतारता ।
हिता हवावाहिता हि पाल वाल लवालपा ।।६।७।।

धीरायामाहयाराधि रामाकामा मकामरा ।
याका भागा गाभा काया मामा गारा रागा मामा ।।६।८३।।

---

# परिशिष्टम् २

## श्लोक सूची

# परिशिष्टम्-३

## चित्रावली

तरङ्गकनिते सेभे रञ्जिते मदिराक्षसे ।
गतेऽतिलानं कैराते कमलाकरनन्दिनि ।।३।१७।।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| त | रं | ग | क | नि | ते | से | भे |
| रं | जि | ते | म | दि | रा | क्ष | से |
| ग | ते | ति | ला | नं | कै | रा | ते |
| क | म | ला | क → | र | नं | दि | नि |

चित्र १

अर्धभ्रमकबन्धः

राममाप मुदा साक्षाद्राज्यलक्ष्मसीः दातनी ।
नितदास्स कृपश्रेणिः प्राप्तभृत्योपमामरा ।।६।१२५।।




चित्र २
आन्दोलिका (शिविका) बन्धः

रामं देवं श्यामायावं द्रागाकारं भो दातारम् ।
गेयो भूदारो यो ध्येयो वन्दे हंसं तं भिन्नाधिः ॥६।१२७॥



चित्र ३
कङ्कणबन्धः



रामधामनताम वक्त्रसोमधामरोम[ला]
लालिता विभीषणेन वायुसूनुनन्दिता ।
तारकेव भूमिभागमाश्रिताप निर्मला
लालसा मनोभवनमस्त्रपाक्षमासुता ॥६।११५॥


चित्र ४
**खड्गबन्धः**

पम्पाकूले क्षणोद्गीतो वीक्ष्य वीरौ खरांशुभूः ।
कम्पालोलेक्षणो जातो लक्ष्यसारौ पराधिभूः ।।४।१।।




चित्र ५
गोमूत्रिकाबन्धः

अपकामचयध्येय भयहेय वरश्रय ।
व्ययक्षयनयश्रेय जयमायदयन्नयः ॥६।१२१॥




चित्र ६

छत्रहर बन्धः

खररुचि मन्दभासि गुरुचारुणा तत्र[त]मः कुले रण-
द्धरि[र]नववैरिणां रणभरे भटमुक्तदरेभसन्ततेः ।
प्रकटकुधारणारतनयनपरिस्फुरितौचितामुका
क्वसितभरेतलोक्षणबाणपरम्परयावधीरिता ।।६।५६।।

चित्र ७

नागबन्धः

साहसानलसामग्री महसापरसामरा ।
रामसारविसामर्थ्या तामसानलसामता ।।१४०।।



चित्र ८
मुरजबन्धः

नलनीलनराटोपनटमाननगाकुला ।
करवालमहारोपखण्डिताननमण्डला: ।।६।४७।।




चित्र ९

लघुचक्रबन्धः

विवारहाहारवाविवादमाननमा दवा ।
रमारतातारमारहानतातततानहा ।।२१४६।।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| वि | वा | र | हा | हा | र | वा | वि |
| वा | द | मा | न | न | मा | द | वा |
| र | मा | र | ता | ता | र | मा | र |
| हा | न | ता | त | त | ता | न | हा |
| हा | न | ता | त | त | ता | न | हा |
| र | मा | र | ता | ता | र | मा | र |
| वा | द | मा | न | न | मा | द | वा |
| वि | वा | र | हा | हा | र | वा | वि |

चित्र १०
सर्वतोभद्रबन्धः